# जैमिनीयन्यायमालाविस्तरस्य अध्ययनम्

(निवीतान्तो भागः)

(Jaiminiya Nyayamala Vistara
(up to Nıvitanta) A Study)

रचयिता :

डॉ. आदरासुपल्लि यज्ञरामुलु
M.A., M.Phil Ph.D.

# Jaiminiya Nyayamala Vistarasya Adhyayanam

by : Dr. A. Yagna Ramulu
"Gurukrupa"
1-3-183-39/12/B/1/2, Kavadiguda,
Hyderabad-500 380

1994

*Copies : 1000*

This Book is Published with the Financial Assistance of
TIRUMALA TIRUPATI DEVASTHANAMS
Under their scheme
"Aid to Publish Religious Books"

मूल्यम् : 40-00

जैमिनीयन्यायमालाविस्तरस्य अध्ययनम्

रचयिता : डॉ. आदरासुपल्लि यज्ञरामुलु
"गुरुकृपा"
1-3-183-39/12/B/1/2, कवाडीगूडा, हैदराबाद्-500 380

*Printed by :*
Shivaji Press, Gunj Bazar, Secunderabad-3

॥ श्रीः ॥

वैदिकमतसमुद्धरणबद्धदीक्षः तत्रभवान् माधवाचार्यः अतीव विस्तृतस्य पूर्वमीमांसा शास्त्रस्य सारमधिजिगमिषून् संक्षेपरुचीन् अनुग्रहीतुं जैमिनीयान् न्यायान् श्लोकैः उपनिबबन्ध, येषामेव जैमिनीय-न्यायमालेति प्रथितं नाम । तस्य व्याख्यामपि विस्तरनाम्नी स एव रचयामास । माधवाचार्यः प्रायः भाट्टमतानुयायी ।

श्री यज्ञरामशर्मा प्रकृतेऽस्मिन् स्वीये ग्रन्थे निवीतान्ते जैमिनीय-न्यायमालाविस्तरे प्रतिपादितान् विषयान् सुचारु संगृह्य मीमांसाशास्त्र-प्रविविक्षूणां महान्तम् उपकारम् अकरोत्, यतः मीमासापरिभाषादि-ग्रन्थानामिव ग्रन्थस्यास्य पठनेन मीमांसाशास्त्रस्वरूपं विनायासेन अधिगन्तुं शक्नुयुः जिज्ञासवः । भाट्ट प्राभाकरमतभेदः अन्ये च विषयाः सप्रमाणं प्रतिपादिताः अस्मिन् ग्रन्थे । सर्वथायं ग्रन्थः व्युत्पित्सूना महते उपकाराय भवेदिति बाढं विश्वसिमि ।

– पुल्लेल श्रीरामचन्द्रः
24–9–1994

—:o:—

# विषयसूचिका

# भूमिका

यद्यपि लोके तावत् निगम, निरुक्त, व्याकरणादिभिः वेदार्थनिर्णयो भवितुमर्हति। तथापि पूर्वापरविरोधे वास्तवार्थनिर्णयः मीमांसाशास्त्रमन्तरेण भवितु नार्हति। तस्मात् विचाररूपमिदं मीमांसाशास्त्रं वेदार्थनिर्णयायावश्यकं भवति।

तत्र जैमिनेः पूर्वमीमांसासूत्राणा शबरस्वामी भाष्यं प्रणिनाय। तदनुसृत्य भाट्टप्राभाकरप्रस्थानद्वयमाविरभूत्।

जैमिनिना यदा मीमांसाशास्त्र सूत्रग्रन्थरूपेण निबद्धं तदारभ्य तदनुसृत्य बहवः पण्डिताः बहून् ग्रन्थन् निर्ममुः। तथापि मीमासासागरस्य दुरवगाहतामालोक्य माधवाचार्येण सहस्रन्यायसङ्ग्रहरूपग्रन्थः विरचितः। तत्र किञ्चिदूनश्लोकसहस्रद्वय वर्तते। स च सुकुमारबुद्धीना बालानामपि राजपुत्राणा क्रीडार्थ निर्मितया नाभिदघ्न्या पुष्करिण्या समा इयं मीमांसा भविष्यतीति। ततश्चास्य न्यायमालाख्यग्रन्थस्य विस्तराभिधाना वृत्तिमरीरचत्। एवञ्चास्य 'जैमिनीयन्यायमालाविस्तरः' इति नामाभूत्।

अस्य ग्रन्थस्य कर्ता माधवः स्वीयवृत्तविषये अधोनिर्दिष्ट श्लोक[1]–स्तोकमुदलेखीत्। तद्यथा :–

---

1. प. स्मृ व्या. P. 1

श्रीमती जननी यस्य सुकीर्तिः मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धिसहोदरौ ।।
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः ।।

इत्याभ्यां श्लोकाभ्यां माधवस्य पिता मायणः, माता श्रीमती, भ्रातरौ सायणभोगनाथौ, सूत्रं बौधायनं, शाखा याजुषी, गोत्रं भारद्वाजम् इति च स्पष्टमेव विदितो भवति ।

अस्मिन् गन्थे माधवः प्रथमाध्यायप्रथमपादप्रथमाधिकरणत्रये भाट्टप्रभाकरमतभेदमुपन्यस्तवान् । ततश्च प्रायेण भाट्टमतमेवोपन्यस्य यथावसरं प्राभाकरमतमप्युपन्यस्तवान् । एकैकस्मिन्नधिकरणे विषयसन्देह-पूर्वपक्षावभासकः एकः श्लोकः, अपरस्तु सिद्धान्तवादिश्लोकः । क्वचित्तु त्रिचतुरा अपि श्लोकाः वर्तन्ते । किन्तु ततो नाधिकाः वर्तन्ते । अपि च श्लोकव्याख्यानरूपो विस्तराख्यभागोऽपि सुस्पष्टतया यथा ज्ञातु शकयते तथा लिखितवान् । इति ।

—:o:—

## माधवस्य समयः

माधवाचार्यः तुङ्गभद्रासरित्तीरे किष्किन्धापरपर्याय हम्पीक्षेत्रस्याभ्याशे 'अनागोन्दी' इत्याख्ये संवसथे कस्यचित् दरिद्रस्य कुले उदियाय[1] इति । माधवस्य जन्म प्रायः शालिवाहनीये १२१७ तमे वर्षे बभूव । १३०२ तमेऽब्दे दीक्षाग्रहणपूर्वकं शृङ्गगिरिपीठाधिरोहणम् । १३०८ तमेऽब्दे समाधिकालः । एव च माधवस्य सद्भावकालः ९१ वर्षात्मक[2] इति ज्ञायते । इति ।

—:o:—

1. शङ्करदिग्विजयग्रन्थोपोद्घाते. P. 18
2. „ „ P. 25

मया तावदत्र 'जैमिनीयन्यायमालाविस्तरः' इत्येतद्ग्रन्थस्थ-निवीतान्त (प्रथमद्वितीयतृतीयाध्यायतृतीयपादान्त) भागीयविषयविचारः प्रभाकरमतभेदपुरस्सरमुपन्यस्तः ।

इदं च परिशोधनं उस्मानियाविश्वविद्यालयसंस्कृतविभागे पदालङ्कृताना विद्वद्वरेण्यानां पूज्यगुरूणा श्रीमता डाक्टर् पुल्लेल श्रीरामचन्द्रुडु महोदयानां वात्सल्यपूर्णे सर्वोपकारिणि पर्यवेक्षणे निरातङ्कपरिसमाप्ति गतमिति तेभ्यो महद्भ्यो गुरुभ्यः नमस्सुमाञ्जलयस्सादरं समर्प्यन्ते ।

अपि च अस्य परिशोधनाग्रन्थस्य लेखने परोक्षसहायं कृतवतां सहृदयाना सुहृदा श्री इसुकपल्लि रामशर्मणां कृतज्ञताः । अपि च विशेषरूपेण अस्य ग्रन्थस्य मुद्रणे आर्थिकसहायं कृतवद्भ्यः तिरूमल तिरुपति देवस्थान कार्यनिर्वणाधिकारिमहोदयेभ्यः सादर कृतज्ञताञ्जलिं व्याहरामि ।

— डा. आदरासुपल्लि यज्ञरामुलु

—:o:—

# जैमिनीयन्यायमालाविस्तरस्य अध्ययनम्

(निवीतान्तो भाग:)

## प्रथमाध्यायस्य प्रथमः पादः

### जिज्ञासाधिकरणम्

(१–१–१)

अथातो धर्मजिज्ञासा ॥१॥

इदमेतदधिकरणसिद्धान्त परं सूत्रम् ।

तत्र प्रथमाध्यायप्रथमपादे प्रथमं जिज्ञासानामकमधिकरणमेवं भाट्टमतेन प्रत्यपादयत् माधवः । तद्यथा । अस्याधिकरणस्य 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिवाक्यं विषयः । अधीतस्य वेदस्य प्रयोजनाकाक्षायां अर्थज्ञानरूपदृष्टप्रयोजनं कल्प्यते । ततश्च विचारमन्तरा अर्थज्ञान न सम्भवतीति विचारशास्त्र स्वाध्यायविधिप्रयुक्तमिति ज्ञायते । एवञ्च यदि विधिप्रयुक्तं स्यात्तदा विचारशास्त्रमारब्धुं शक्यते । तस्मात् विचारशास्त्रं वैधमवैध वेति संशयः । तत्र अप्राप्ताध्ययनस्याविधायकत्वात् अवघातविधिवत् नियमविधित्वासम्भवाच्च । विचारशास्त्रस्य वैधत्वं नास्ति । तर्हि श्रूयमाणविधेः का गतिरिति चेत् स्वर्गाय अक्षरग्रहणमात्र विधीयते । एवञ्च 'वेदमधीत्य स्नायात्'[1] इत्यत्र वेदाध्ययन-

---

1. J. N. V. P. 12

समावर्तनयोर्नैरन्तर्यप्रतीतेः धर्मविचारशास्त्रं नारम्भणीयमिति पूर्वपक्षः ।

अपूर्वविधित्वं तु मास्तु । नियमविधित्व तु निवारयितु न शक्यते । 'यथा दर्शपूर्णमासजन्यं परमापूर्व अवघात नियमजन्यावान्तरा-पूर्वस्य कल्पकं, एवमशेषक्रतुजन्य अपूर्वजात क्रतुज्ञानसाधनाध्ययननियमज-न्यस्यापूर्वस्य कल्पक भविष्यति[1]' इति ।

अपि च दृष्टे फले सम्भवति अदृष्टफलकल्पनाया अन्याय्यत्वात् अदृष्ट स्वर्गफलकल्पना न युक्ता । किन्तु अर्थज्ञानरूपदृष्टप्रयोजनमेव कल्प्यते । यद्यपि अधीतवेदस्य व्याकरणाद्यङ्गैः अर्थज्ञानं भवितुमर्हति । तथापि निर्णयस्य विचाराधीनत्वात् विचारशास्त्रमारम्भणीयम् इति सिद्धान्तः । 'अधीत्य स्नायात्' इत्यत्र क्त्वा प्रत्ययस्य अध्ययनसमावर्त-नयोः पूर्वापरीभाव समानकर्तृकत्वे एव प्रयोगः, न त्वानन्तर्ये । अतश्च अथ वेदाध्ययनानन्तर, अतः अधीतवेदत्वात्, धर्मः वेदार्थरूपः, तस्य जिज्ञासा विचारः गुरुकुले अवस्थाय कर्तव्यः । तस्माद्विचारशास्त्रमारम्भणी-यमिति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–**

अत्रापि विषयसशयौ समानौ । विचारशास्त्रं विषयः, वैधमवैध वेति संशय इति । पूर्वोत्तरपक्षौ तावदन्यथा वर्तेते । तद्यथा 'अष्टवर्षं ब्राह्मणमुपनयीत' 'तमध्यापयीत' इत्याभ्यां वाक्याभ्यां यस्य आचार्यत्व-कामो वर्तते, स एव अष्टवर्षं ब्राह्मणमुपनीय ततस्तमध्यापयेदित्यर्थाव-बोधो भवति । एवञ्च आचार्यकर्तृकमध्यापनं माणवककर्तृकमध्ययनं

---

1. J. N. V. P. 12

विना न सम्भवतीति विधिमन्तरेणैव माणवकस्याध्ययनं सम्भवति । तस्मादाचार्यकरणकादध्ययनादर्थज्ञानमपि भवति किं पाठमात्रमेव वा । नाद्यः । यतः ज्ञानमन्तरेणापि अध्ययनं सम्पद्यते । पाठमात्रे तु विचारस्य विषय एव नास्ति । तस्माद्विचारशास्त्रस्य अवैधत्वान्नेद-मारम्भणीयम् । तथा च 'स्वाध्यायोऽध्येतव्यः' इत्यस्य नित्यानुवादत्व-मिति पूर्वपक्षः ।

स्वाध्यायविधेः आचार्यकनिष्पत्तिरेव प्रयोजन न भवति, किन्त्व-र्थावबोध एव । अत उत्सर्गतो विवक्षितार्थस्य वेदार्थस्य निर्णय एव विचारशास्त्रस्य फलम् । तस्माद्विचारशास्त्रमारम्भणीयमिति प्रभाकर-मतेन सिद्धान्तः ।

**मतभेद. :–**

'स्वाध्यायोऽध्येतव्यः' इत्यत्र स्वाध्यायस्य अदृष्ट स्वर्गमेव फलमिति कृत्वा 'वेदमधीत्य स्नायात्' इत्यस्य च अनुग्रहाय वेदार्थो न जिज्ञास्य इति भाट्टमते पूर्वपक्षः । दृष्टफले सम्भवति अदृष्टफलकल्पनाया अन्याय्यत्वात् अर्थज्ञानरूप दृष्टप्रयोजनं कल्प्यते । तच्च व्याकरणाद्यङ्गेभ्योऽपि भवितु-मर्हति । तस्मादर्थज्ञाननिर्णय एतच्छास्त्राधीन एवेति वेदार्थो जिज्ञास्य इति भाट्टमतम् ।

आचार्यकरणकाध्यापनादेव अध्ययनविधिमन्तरेण च माणवक-स्याध्ययनं सम्भवति । तथा च अर्थज्ञानमन्तरा अध्ययन सम्पद्यत इति अवैधत्वाद्विचारशास्त्र नारम्भणीयमिति पूवपक्षः । स्वाध्यायविधेः आचार्यकनिष्पत्तिरेव प्रयोजन न भवति, किन्तु अर्थावबोध एव । वेदार्थनिर्णय एव विचारफलम् । तस्माद्विचारशास्त्रमारम्भणीयमिति प्रभाकरमतम् ।

—:o:—

## धर्मलक्षणाधिकरणम्

(१-१-२)

चोदनालक्षणोऽर्थो धर्मः ॥२॥
इदमेतदधिकरणसिद्धान्तपरं सूत्रम् ।

पूर्वाधिकरणे धर्मो जिज्ञासितव्य इत्युक्तम् । तर्हि यदि धर्मस्य लक्षणं स्यात्, यद्वा धर्मे मानं स्यात्तदा धर्मो विचारयितव्यो भवति । अतश्च धर्मस्य लौकिकाकारहीनत्वाल्लक्षण नास्ति । रूपाभावाच्च धर्मे प्रत्यक्षं प्रमाणं न प्राप्नोति । तन्मूलकत्वेन अनुमानादीनामप्रवृत्तिः । तस्माल्लक्षणप्रमाणयोरभावात् धर्मो न जिज्ञास्य इति प्राप्ते ।

यद्यपि चक्षुरादिगम्य आकारो धर्मस्य नास्ति तथापि 'चोदनालक्षणोऽर्थो धर्मः[1]' इति जैमिनिना धर्मलक्षणमुक्तम् । चोदनायाः विधिवाक्यमर्थः । 'चोदनाचोपदेशश्च विधिश्चैकार्थवाचिनः[2]' इति । एवञ्च अर्थत्वे सति चोदनागम्यः धर्मः इति लक्षणं पर्यवसन्नम् । अतश्च गम्ये धर्मे विधिवाक्य प्रमाणम् । तस्माद्धर्मः लक्षणप्रमाणाभ्यामुपेत इति भाट्टमतेन सिद्धान्त ।

---

1. J. N. V. P. 14
2. S. D. P. 45 (सिद्धान्त चन्द्रिका व्याख्याने)
3. J. N. V. P. 15

**प्रभाकरमतम् :—**

धर्मो नाम वेदार्थः । स च 'अथातो धर्मजिज्ञासा' इत्यनेन सूत्रेण विचार्यविषय इति ज्ञातः । एव तर्हि मन्त्रार्थवादप्रतीतसिद्धार्थोऽपि वेदार्थः, उत विधिवाक्यप्रतीतः वाक्यार्थ एव वेति संशयः । तत्र 'लोकावगत-सामर्थ्यः शब्दो वेदेऽपि बोधक.' इत्युक्तदिशा 'पुत्रस्ते जातः' इत्यादौ व्युत्पत्तिसम्भवात् सिद्धार्थोऽपि वेदार्थ इति प्राप्ते, पुत्रजन्महर्षहेतूनां बहूनां सत्त्वादस्य वाक्यस्य पुत्रजन्मैवार्थ इति निर्णयो दुर्लभः । एवञ्च सिद्धे व्युत्पत्त्यसम्भवात् विधिवाक्यप्रतीतकार्यरूप एव वेदार्थ. । मन्त्रादिप्रतिपाद्यस्तु कार्यान्वयित्वेनैव वेदार्थ इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेद :—**

धर्मे लक्षणप्रमाणयोरभावान्न धर्मो जिज्ञास्य इति पूर्वपक्षः । 'चोदनालक्षणोऽर्थो धर्म.' इत्यत्र अर्थत्वे सति चोदनागम्यो धर्म इति धर्मलक्षणम् । 'चोदनैव धर्मे प्रमाणम्' इति प्रमाणं च जैमिनिना उक्तम् । तस्माल्लक्षणप्रमाणयोस्सत्त्वाद्धर्मो जिज्ञास्य इति भाट्टमतम् ।

मन्त्रार्थवादप्रतीतः सिद्धार्थ एव वेदार्थ इति पूर्वपक्षः । विधि-वाक्यप्रतीतकार्यार्थ एव वेदार्थ इति सिद्धान्तः प्रभाकरमते ।

—:o:—

## प्रमाणपरीक्षाधिकरणम्

(१-१-३)

तस्य निमित्तपरीष्टिः ॥३॥ इदं सिद्धान्तसूत्रम् ।

चोदनात्मकं यद्धर्मस्य मान तत्र परीक्ष्यतां नवेति भाट्टमते–
सशयः । पूर्वोत्तरपक्षौ तु –

मानोपदेशान्मेयस्य सिद्धत्वात्किं परीक्षया ।
मैवं विचारशास्त्रेऽस्मिन् परीक्षोपेक्षते कुतः[1] ॥ इति ।

**प्रभाकरमतम् :–**

प्रथमतः वेदार्थः भेदाभेदादिना परीक्ष्यः, उत प्रमाणमेव आदौ परीक्ष्यं इति संशये वेदार्थस्य प्रधानत्वात्प्रथम भेदाभेदादिना तस्यैव परीक्षा कार्या इति चेन्न । यतः वेदार्थस्य प्राधान्येऽपि प्रमाणप्रमेययोर्मध्ये प्रमाणस्यैव अनपेक्षत्वेन प्राधान्यात् प्रथम प्रमाणपरीक्षा कर्तव्या इति इति सिद्धान्तः ।

**मतभेदः :–**

अत्र भाट्टप्राभाकरमतयोर्मध्ये उभयत्रापि सिद्धान्तपक्षः समान एव । प्रमाणपरीक्षा आदौ कर्तव्येति । पूर्वपक्षे तावद्भेदो दृश्यते । चोदना परीक्षितव्या नवेति भाट्टमते पूर्वपक्षः । आदौ प्रमाणपरीक्षा उत वेदार्थ-परीक्षा वेति प्रभाकरमते ।

—:o:—

1. J. N. V. P. 16

## धर्मे प्रत्यक्षाद्यगम्यत्वाधिकरणम्

(१–१–४)

सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म
तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥४॥

सिद्धान्तपरं सूत्रमिदम् ।

धर्मः प्रत्यक्षादिगम्य उत विध्यैकगम्य इति संशयः । तत्र प्रत्यक्षादीनां प्रमाणत्वात् प्रमेये धर्मे प्रामाण्यमिति पूर्वपक्षः । धर्मस्य प्रमेयत्वेऽपि रूपाभावान्न प्रत्यक्षयोग्यता । तन्मूलत्वेन अनुमानादीनामपि न धर्मे प्रामाण्यम् । तस्माद्विध्येकगम्यः धर्मः । इति । अत्र प्रभाकराशयोऽपि सम एव ।

—:o:—

## विधिप्रामाण्याधिकरणम्

(१–१–५)

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः
तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे
तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥५॥

इद सूत्रमेतदधिकरणसिद्धान्तपरम् ।

पूर्वाधिकरणे विधे. धर्मविषये प्रामाण्यमित्युक्तम् । तदेवात्र पुनराक्षिप्य समाधीयते । विधेः धर्मबोधकत्वे प्रामाण्यमस्ति न वेति संशयः । तत्र लोके तावदाप्तवाक्यस्य शक्तिग्रहणपूर्वक हि प्रामाण्यं दृष्टम् । न तथा अलौकिके धर्मे वर्तते । तस्माद्विधेरबोधकत्वाद-प्रामाण्यमिति पूर्वपक्षः ।

**सिद्धान्तः :–**

'यथा प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्र मधुकर-शब्दार्थमजानन् पुरुष· अन्यपदार्थमवलोक्य तत्समभिव्याहारात् कमलोदरे मधुपान कुर्वन्त भ्रमर दृष्ट्वा मधुकरशब्दस्य सङ्गति गृहीत्वा वाक्यार्थ प्रतिपद्यते । तद्वदेव' 'कारीर्या वृष्टिकामो यजेत' इत्यत्रापि प्रसिद्धार्थ-कानां वृष्ट्यादिपदानां समभिव्याहारात् । अलौकिकभावनायां विधेः सङ्गतिं गृहीत्वा पुरुषो वाक्यार्थ जानाति । तस्माद्विधेरबोधकत्वलक्षण अप्रामाण्यं नास्ति । अनियतदृष्टफले चित्रायागादौ, प्रतिनियतजन्मान्त-रफले ज्योतिष्टोमादौ च सङ्गतिर्नास्ति । तर्हि कथमिति प्रश्ने, विधेः स्वतः प्रामाण्याभ्युपगमे न सवादाद्यपेक्षा । अतः अप्रामाण्यकारणयोः अबोधकत्वसापेक्षत्वयोः अभावात् विधे. स्वतः प्रामाण्यमिति भाट्टमते सिद्धान्त· ।

**प्राभाकरमतम् :–**

अपूर्व तावत्प्रत्यक्षाद्यवेद्य भवति । तस्मात्तस्य वेदार्थता अस्ति न वेति सशयः । तत्र अपूर्वस्य वेदार्थत्वं नास्ति । शब्दस्य यथा कार्यान्विते व्युत्पत्तिः तथा मानान्तरवेद्यत्वोपहिते स्वार्थे एव शक्तिः । अतश्च अपूर्वस्य न वेदार्थता इति पूर्वपक्ष. । कार्यान्वितस्वार्थे स्वाभावितसम्बन्धव्युत्पत्तेः तत्र वेदार्थधीः । अतश्च लोकव्यवहारवदेव वेदे

लिङादेः अपूर्वकर्यार्थता सिद्धयति। अतश्च वेदवचसां मानान्तरानपेक्षार्थत्वं युक्तं भवतीति सिद्धान्तः ।

मतभेदः :—

विधेरबोधकत्व प्रामाण्यमस्तीति भाट्टमते पूर्वपक्ष.। अपूर्वस्य वेदार्थता नास्तीति प्राभाकरमते पूर्वपक्षः । लौकिकप्रसिद्धार्थकपदसमभिव्याहारात् वेदेऽपि विधेरर्थबोधकत्वस्य सत्त्वात्प्रामाण्यमेवेति भाट्टमतम् । लोकव्यवहारवदेव लिङादेः अपूर्वकार्यार्थता अस्तीति प्रभाकरमतम् ।

—:o·—

## शब्दनित्यताधिकरणम्

(१–१–६)

कर्मके तत्र दर्शनात् ॥६॥
अस्थानात् ॥७॥
करोतिशब्दात् ॥८॥
सत्त्वान्तरे च यौगपद्यात् ॥९॥
प्रकृतिविकृत्योश्च ॥१०॥
वृद्धिश्च कर्तृभूम्नाऽस्य ॥११॥ इयन्ति पूर्वपक्ष सूत्राणि ।

समं तु तत्र दर्शनम् ॥१२॥
सतः परमदर्शन विषयानागमात् ॥१३॥
प्रयोगस्य परम् ॥१४॥
आदित्यवद्यौगपद्यम् ॥१५॥

वर्णान्तरमविकारः ॥१६॥

नादवृद्धिपरा ॥१७॥

नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥१८॥

सर्वत्र योगपद्यात् ॥१९॥

संख्याभावात् ॥२०॥

अनपेक्षत्वत् ॥२१॥

प्रख्याभावाच्च योगस्य ॥२२॥

लिङ्गदर्शनाच्च ॥२३॥ इमानि सिद्धान्तसूत्राणि ।

धर्मे विधेः प्रामाण्याङ्गीकारात् विध्यादिरूपो यः शब्दः स नित्योऽनित्यो वेति सशयः । तत्र वर्णसमूहव्यतिरिक्तः कश्चन स्पोटनामकः नित्यः पदार्थो वर्तते । स एव शब्दः, न तु वर्णाः इति वैयाकरणा वदन्ति ।

तार्किका इम विषयं न सहन्ते । यत प्रतिपुरुषं प्रत्युच्चारणं च वर्णानां उत्पत्तिविनाशौ दृश्येते । एवञ्च वर्णा अनित्या इति ज्ञायते । तस्मादेव वर्णव्यतिरिक्तः कश्चन स्फोटः कथं अङ्गीकर्तुं शक्यते । अतश्च वर्णा अनित्या इति तार्किका वदन्ति । अतश्च कारणदोषसम्भवाद्विधेरप्रामाण्यमिति पूर्वपक्षः ।

सिद्धान्तस्तु गोशब्दस्य बहुकृत्व उच्चारणेऽपि स एवायं गकार इत्येवाबाधितज्ञानं जायते । पुरुषप्रयत्नस्य नित्यवर्णाभिव्यञ्जके एव कारणत्वात् उत्पत्तिविनाशावपि न स्तः । तस्माद्वर्णस्य नित्यत्वाद्वर्णसमूहो विध्यारिरूपशब्दोऽपि नित्यएवेति विधिः धर्मे प्रमाणमिति भाट्टमतानुसारेण ।

प्रभाकरमतानुसारेण तावत् पुरुषप्रयत्नजन्यत्वाद्धेतोः उत्पन्न-श्शब्दः, विनष्टश्शब्दः इत्यादिप्रतीतेः वर्णा अनित्याः इति पूर्वपक्षः ।

सिद्धान्तस्तु वर्णाभिव्यक्तावेव पुरुषप्रयत्नः, न तु तदुत्पत्तौ । यत' 'अष्टकृत्व' गोशब्द उच्चरित.' इत्यादिप्रयोगादिति ।

**सारांशः :—**

(१) वर्णसमुदायव्यतिरिक्तः कश्चन स्फोटनामको नित्यः पदार्थोऽस्तीति वैयाकरणानां मतम् ।

(२) वर्णेषु उत्पत्तिविनाशयोस्सम्भवात् वर्णानामनित्यत्वाद्वर्ण-व्यतिरिक्त. स्फोटो नास्ति, अतः वर्णा अनित्या इति तार्किकानां मतम् ।

(३) स एवायं गकारः इत्यभिज्ञाबलाद्वर्ण नित्य एव । प्रयत्नस्त्वभिव्यञ्जक' । तस्माद्वर्णा नित्या एवेति भाट्टमतम् ।

(४) पुरुषप्रयत्नजन्यत्वाद्वर्णस्य, वर्णे जन्मोपलम्भात् वर्णोऽनित्य इति पूर्वपक्षः । वर्णाभिव्यक्तावेव पुरुषप्रयत्नः न तु तदुत्पत्तौ । तस्माद्वर्णा नित्या एवेति प्रभाकरमतम् ।

—:o:—

## वेदप्रत्यायकत्वाधिकरणम्

(१–१–७)

उत्पत्तौ वाऽवचनास्युः अर्थस्यातन्निमित्तकत्वात् ॥२४॥

इदं पूर्वपक्षसूत्रम् ।

तद्भूताना क्रियार्थेन समाम्नायोऽर्थस्यतन्निमित्तत्वात् ॥२५॥
लोके सन्नियमनात् प्रयोगसन्निकर्षस्स्यात् ॥२६॥

पदपदार्थसम्बन्धस्य नित्यत्वेऽपि वेदवाक्यार्थस्सङ्गतिग्रहणमपेक्षितम् । अतो नैरपेक्ष्याभावात् निरपेक्षप्रामाण्यं वैदिकवाक्यानां नास्तीति पूर्वपक्षः ।

'गामानय' इत्यादिलौकिकवृद्धप्रयोगे पदपदार्थयो सङ्गतिर्गृह्यते । तर्हि वाक्याद्वाक्यार्थप्रतीतिः कथमिति चेत् यथा लोके आकांक्षायोग्यतासन्निधि वशाद्वाक्यं तावत्वाक्यार्थं प्रतिपादयति, तद्वदेव वैदिकवाक्यानामपि प्रत्यायकत्वादनपेक्षप्रामाण्यं सिद्धमेवेति भाट्टमतेन सिद्धान्तः ।

**प्राभाकरमतानुसारेण एवमधिकरणरचना :–**

'अग्निहोत्रं जुहुयात्स्वर्गकाम'.[1] इत्यदिवैदिकवाक्यानां

---

1. J. N. V. P. 20

स्वार्थबोधकत्वाभावात् लोके तादृशवाक्याभावाच्च अप्रामाण्यमेवेति प्रभाकरमते पूर्वपक्षः

सिद्धान्तस्तु भाट्टसिद्धान्ततुल्य एव ।

**सारांशः :–**

वेदवाक्यस्य वाक्यार्थे सङ्गतिकरणस्य सापेक्षितत्वात् निरपेक्ष-प्रामाण्यं नास्तीति पूर्वपक्षः । लौकिकवाक्यवदेव वैदिकवाक्यानामपि प्रत्यायकत्वात् प्रामाण्यमेवेति भाट्टमतसिद्धान्तः ।

वैदिकवाक्याना स्वार्थबोधकत्वाभावात् अप्रामाण्यमिति पूर्वपक्षः । प्रभाकरमते । सिद्धान्तस्तु पूर्वमतसम एव ।

— o:—

## वेदापौरुषेयत्वाधिकरणम्

(१–१–८)

वेदांश्चैके सन्निकर्ष पुरुषाख्याः ॥२७ ।
अनित्य दर्शनाच्च ॥२८॥ इमे पूर्वपक्षसूत्रे ।
उक्तं तु शब्दपूर्वत्वम् ॥२९॥
आख्याः प्रवचनात् ॥३०॥
परं तु श्रुतिसामान्यमात्रम् ॥३१॥ इमानि सिद्धान्त सूत्राणि ।
कृते वा विनियोगस्स्यात्कर्मणस्सम्बन्धात् ॥३२॥

वेदाः पौरुषेया अपौरुषेया वेति सशयः । यत. 'वेदा अपौरुषेयाः' इति वचनात् अपौरुषेयत्व वेदानामिति ज्ञायते । 'काठकम्' इत्यादि–

समाख्यावशादत्र तद्धितप्रत्ययः, 'तेनप्रोक्तम्'[1] इति सूत्रवशात्कठेन प्रोक्त-मित्यर्थं बोधयति । अतः कठो नाम पुरुषोऽस्ति, तेन स वेदः प्रोक्त इति ज्ञायते । तस्मात् 'विमतं वेदवाक्यं पौरुषेयम्, वाक्यत्वात्, कालिदासा-दिवाक्यवत्' इत्यनुमानात् पुरुषकर्तृकत्वात्पौरुषेयत्वमेव वेदानामिति पूर्वपक्षः ।

'काठकम्' इत्यादि समाख्या तावत् अध्ययनसम्प्रदायप्रवर्तकत्वेनापि युक्ता भवति । यथा कालिदासादिग्रन्थेषु तत्तत्सर्गावसाने कर्तृनामो-पलभ्यते, तद्वद्वेदे नास्ति । अतोऽनुमानस्य अनुकूलतर्कपराहतत्वाद-पौरुषेयत्वमेव वेदानाम् । तेन अप्रामाण्यसम्पादकस्य पुरुषबुद्धिकृतदोष-स्याप्यभावाद्विधिवाक्यस्य धर्मे प्रामाण्यमेवेति भाट्टमतसिद्धान्तः ।

प्रभाकरमतमप्येवमेवास्ति ।

**सारांशः :—**

'काठकम्' इत्यादिसमाख्यायाः कठेन प्रोक्तमिति व्युत्पत्ते-स्सम्भवात् पुरुषकर्तृकत्वदर्शनात् 'वेदाः पौरुषेयाः' वाक्यत्वात्, भारता-दिवाक्यवत्' इत्यनुमानाच्च वेदानां पौरुषेयत्वमेवेति पूर्वपक्षः । वाक्यत्वहेतुकानुमानस्य प्रतिकूलतर्कपराहतत्वात्' 'काठकम्' इत्यादि समाख्यायास्तु तत्सम्प्रदायप्रवर्तकत्वेनाप्युपपत्तेश्च वेदानामपौरुषेयत्वमेवेति भाट्टमतसारः ।

—:o:—

---

1. पाणिनिसूत्रेषु 4-3-101

## प्रथमाध्यायस्य प्रथमपादाधिकरणेषु
## प्रतिपादिता विषया:

१. प्रथमाधिकरणे प्रयोजनवदर्थज्ञानाय वेदार्थो जिज्ञास्य इति प्रति-पादितः ।

२. धर्मलक्षणं द्वितीयाधिकरणे निरूपितम् ।

३. धर्मे प्रमाणपरीक्षा कर्तव्येति तृतीयाधिकरणे निरूपितम् ।

४. चतुर्थाधिकरणे विधेः धर्मे प्रामाण्यं निरूपितम् ।

५. पञ्चमाधिकरणे विधेः स्वतः प्रामाण्यं निरूपितम् ।

६. षष्ठाधिकरणे शब्दस्य नित्यता निरूपिता ।

७. सप्तमाधिकरणे वैदिकवाक्याना प्रत्यायकत्वेन प्रामाण्यमस्तीति निरूपितम् ।

८. अष्टमाधिकरणे वेदानामपौरुषेयत्वं निरूपितम् ।

प्रथमः पादः समाप्तः

—.o:—

## अथ प्रथमाध्यायस्य द्वितीयः पादः

### अर्थवादाधिकरणम्

(१-२-१)

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् तस्मादनित्य-
मुच्यते ।१।

शास्त्रदृष्टविरोधाच्च ।२।

तथा फलाभावात् ।३।

अन्यानर्थक्यात् ।४।

अभागिप्रतिषेधाच्च ।५।

अनित्यसंयोगात् ।६।

एतानि पूर्वपक्षसूत्राणि । विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन
विधीनां स्युः ।७।

तुल्यं च साम्प्रदायिकम् ।८।

अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्व-
प्रयोगभूतस्तस्मादुपपद्येत ।९।

गुणवादस्तु ।१०।

रूपात्प्रायात् ।११।

दूरभूयस्त्वात् ।१२।
अपराधात्कर्तुश्च पुत्रदर्शनम् ।१३।
आकालिकेप्सा ।१४।
विद्याप्रशंसा ।१५।
सर्वत्वमाधिकारिकम् ।१६।
फलस्यकर्मनिष्पत्तेस्तेषां लोकवत्परिणामतः फलविशेषः स्यात् ।१७।
अन्त्ययोर्यथोक्तम् ।१८। इयन्ति सिद्धान्तसूत्राणि ।

'स्वाध्यायोऽध्येतव्य' इति विधिना तावत् सर्वस्यापि वेदस्य अध्येयत्वेन विधान कृतम् । तत्र 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण चोदनाना वेदवाक्यानामेव धर्मे प्रामाण्य सम्पादितम् । ततश्च तदवय-वत्वेनोपस्थिताना अर्थवादादीनामपि अध्ययनपरम्पराया दर्शनात् धर्मे चोदनावत्प्रामाण्यमस्ति न वेति विचारः प्रस्तुतो भवति । अतश्च मन्त्रा-पेक्षया अर्थवादानामन्तरङ्गत्वात् प्रथम अर्थवादानामेव प्रामाण्यं सम्पाद-नीयं भवति । एवञ्च अर्थवादानां प्रामाण्यमस्ति न वेति सशयः ।

तत्र 'वायव्यं श्वेतमालभेत भूतिकामः'[1] इत्यत्र विधिवाक्यगतवाय-व्यादिशब्दाः 'वायुर्वै क्षेपिष्ठा देवता', वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति[2]' इत्याद्यर्थवादशब्द नैरपेक्ष्येणैव प्रवृत्ताः विशिष्टार्थं विदधति । अर्थवादशब्दाश्च विधिनिरपेक्षेणैव कञ्चन वृत्तान्तं बोधयन्ति । तस्मादर्थवादेष्वनुष्ठानेन पदार्थबोधकत्वाभावात् एकवाक्यत्वाभावाच्च नैषां धर्मे प्रामाण्यमिति पूर्वपक्षः ।

---

1. J. N. V. P. 22
2. Ibid. P. 22

यद्यप्यत्र पदैकवाक्यता नास्ति तथापि वाक्यैकवाक्यता विद्यत एव । यत· विधिस्तावद्विधेयार्थविषये पुरुष प्रवर्तयितु प्राशस्त्यमपेक्षते, अर्थवादवाक्य च प्रयोजनवदर्थपर्यवसितविधिवाक्यपरिगृहीतपुरुषार्थ-मपेक्षते । एवञ्च विध्यपेक्षित प्राशस्त्य लक्षणावृत्त्या अर्थवादवाक्य समर्पयतीति वाक्यैकवाक्यता विद्यत एव । 'यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य देवता, ततः प्रशस्तमिम वायव्य पशुमालभेत[1]' इत्यन्वय । तस्मादर्थवादवाक्याना विध्यपेक्षितप्राशस्त्यसमर्पकत्वेन प्रामाण्यं सिद्धयतीति भाट्टमतेन सिद्धान्तः ।

इदमधिकरणमन्यथापि प्रत्यपादयन्माधवाचार्यः ।

यतो वायु· क्षिप्रमेव फलप्रदो भवति अतः 'वायव्यमालभेत' इति विधिः अर्थवादोक्तार्थमपेक्ष्य पुरुष नियुङ्क्ते, तत सापेक्षत्वादप्रामाण्य-मिति पूर्वपक्षः ।

सापेक्षत्वादप्रामाण्यमिति तु न भवति । यतोऽत्र अर्थवादवाक्येन कर्मफलप्रदातृदेवतातोषकत्वार्थमेव कर्मप्राशस्त्यं लक्षणयोच्यते । तथा च प्रशस्त कर्म अनुष्ठेयमिति सार्थवादस्य विधेरर्थः पर्यवस्यति । तस्मात्सा-पेक्षत्वाभावादर्थवादस्य धर्मे प्रामाण्यमेवेति ।

**पार्थसारथेर्मतम् :–**

अर्थवादानां प्रामाण्यमस्ति न वेति संशय. । तत्र अर्थवादाना लक्षणया स्तुतिपरत्वमङ्गीकृत्य विध्येकवाक्यत्वात्प्रामाण्यं भवतीत्यत्र तात्पर्यानुपपत्तिः कारणमिति लक्षणा कृता । किन्तु अर्थवादवाक्ये शक्त्या भूतार्थमात्रप्रतिपादनात् प्राशस्त्यं नावगम्यते । लक्षणया तु प्राशस्त्यं

---

1. J. N. V. P. 23

गम्यते । अतः श्रौतार्थसम्भवे लक्षणा न युक्ता । लक्षणा च एकवाक्यत्वे सम्भवति । तस्यां च प्रमाणाभावादर्थवादाना धर्मे प्रामाण्यं नास्तीति पूर्वपक्ष. ।

स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते ।
सर्वस्तेनार्थवादानां प्राशस्त्येन प्रमाणता[1] ।

इति स्वाध्यायाध्ययनविधिना दृष्टार्थत्वात्सर्वस्यापि वेदस्य प्रयोजनवदर्थ-पर्यवसानं बोधितम् । किन्तु भूतार्थप्रतिपादकार्थवादवाक्यानां प्रयोजनाभावात् ततो लक्ष्यमाणः प्राशस्त्यरूपोऽर्थः प्रयोजनाकांक्षां पूरयतीति स एवार्थो गृह्यते । यतः स्वाध्यायविधिरेव प्रयोजनवदर्थपर्यवसानं सर्वस्यापि वेदस्य अङ्गीकरोति । एवञ्च लक्षणया यः प्राशस्त्यरूपोऽर्थः सः स्तुति-परामाकांक्षां पूरयन् प्रयोजनवान् भवति । तदेवं अर्थवादवाक्यानां विधिनिषेधापेक्षितस्तुतिनिन्दासमर्पकत्वेन प्रामाण्यमिति पार्थसारथिमिश्र-सिद्धान्ताशय. ।

**मदभेद.** :—

अर्थवादवाक्यानि विधिवाक्यनैरपेक्ष्येण कञ्चन वृत्तान्तं बोध-यन्ति । तस्माद्वाक्यैकवाक्यताया अभावान्नास्ति धर्मे प्रामाण्यमर्थवादाना-मिति पूर्वपक्षः । अर्थवादवाक्यानां लक्षणावृत्त्या विध्यपेक्षितप्राशस्त्य-समर्पकत्वात्, विधिवाक्यैकवाक्यतायास्सत्त्वाच्च धर्मे प्रामाण्यमेवेति भाट्ट-मतसिद्धान्त· ।

विधेरर्थवादोक्तार्थसापेक्षत्वान्नैरपेक्ष्यं प्रामाण्यं नास्तीति पूर्वपक्ष-यित्वा प्रशस्तं कर्म इत्यस्मिन्नर्थे अर्थवादोपयोगता, न तु विधेस्सापेक्षास्ति ।

---

1. शा. दी. P. 6 (1-2-1)

तस्माद्विधे. नैरपेक्ष्यं प्रामाण्य नास्तीति सिद्धान्तमन्यथापि माधवः प्रत्यपादयत् ।

अर्थवादवाक्याना भूतार्थमात्रप्रतिपादनसम्भवे लक्षणाया अयुक्तत्वान्नार्थवादानां प्रामाण्यमिति पूर्वपक्षः । स्वाध्यायविधिना सर्वस्यापि वेदस्य प्रयोजनवदर्थपर्यवसानात्, लक्षणया लक्ष्यमाणोऽर्थः स्तुतिपरामाकांक्षा पूरयतीति प्रयोजनवान् भवति । तस्मादर्थवादानां प्रामाण्यमेवेति पार्थसारथेर्मतम् ।

—:o:—

## विधिवन्निगदाधिकरणम्

(१–२–२)

विधिर्वा स्यादपूर्वत्वाद्वादमात्र ह्यनर्थकम् ।१९। इदं पूर्वपक्षसूत्रम् ।
लोकवदिति चेत् ।२०। न पूर्वत्वात् ।२१। उक्त तु वाक्यशेषत्वम् ।२२। विधिश्चानर्थकः क्वचित्, तस्मात्स्तुतिः प्रतीयते, तत्सामान्यादितरेषु तथात्वम् ।२३। प्रकरणेसम्भवन्नपकर्षो न कल्प्येत, विध्यानर्थक्य हि तं प्रति ।२४। विधौ च वाक्यभेदः स्यात् ।२५। इयन्ति सिद्धान्तपराणि सूत्राणि ।

विधिवन्निगदाना प्रामाण्यमस्ति न वेति संशयः । 'तत्र' औदुम्बरो यूपो भयति, ऊर्ग्वा उदुम्बरः, ऊर्क् पशवः, ऊर्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुध्यै' इत्यत्र ऊर्गित्यस्य अमृतशब्दाभिधेयोऽत्यन्तसारभूतः सूक्ष्मोऽन्नरस इत्यर्थः । अतः औदुम्बररूपं यूपं यो भावयति यजमानाय सोऽध्वर्युः

पशून् धारयतीत्यर्थः । अपि च अवरुध्यै इति तादर्थ्यचतुर्थ्या फलपरत्वं गम्यते । तेन च स्तावकत्वानुपपत्तेः विधिवाक्यस्य फलकल्पनैवात्र क्रियते । नत्वस्य स्तावकत्वेन अर्थवादत्वमिति पूर्वपक्षः ।

ऊर्जोऽवरोधः अविहितस्य औदुम्बरत्वस्य फल न सम्भवति । विहितस्य औदुम्बरत्वस्य इत्युक्ते तत्र प्रत्यक्षो विधिर्नास्ति । तस्मात् स्तुत्या विधिरुन्नेयो भवति । स च विधि अङ्गीकरोति । तथा च वाक्यभेदभयात् स्तुतिः फलबोधश्च न भवति । तथा च फलविधिवन्नि-गद्यमानत्वादिद वाक्य स्तावकमेव । तेन विधिवन्निगद्यमानानामर्थ-वादानामपि स्तावकत्वेन प्रामाण्यमेवेति भाट्टमतेन सिद्धान्त ।

**अत्र प्रभाकरमतेन एवमधिकरणरचना**

'औदुम्बरो यूपो भवति' इत्याद्येकवाक्ये औदुम्बरो यूप कर्तव्यः, उदुम्बरेण पशव कर्तव्या.' इति परस्परविरुद्धसाध्यद्वयदर्शनात् वाक्य-भेदो भवति । अतः संशयहेतुत्वात्कृत्स्नस्य वेदस्य अप्रामाण्यमिति पूर्वपक्षः ।

वाक्यद्वयस्य परस्परसम्बन्धाङ्गीकारेण एकार्थता वक्तु शक्यते । 'औदुम्बरेण पशवो भवन्ति, तस्मादौदुम्बरं यूपं कुर्यादिति । अतः साध्य-द्वयाभावात् वाक्यभेदाभावात् कृत्स्नस्य वेदस्य प्रामाण्यमेवेति प्रभाकर-मतम् ।

**मदभेदः :–**

'ऊर्जोऽवरुध्यै' इत्यस्य फलपरत्वमेव, न तु स्तावकत्वमिति पूर्वपक्षः । विधिवन्निगद्यमानत्वादस्य स्तावकत्वेन प्रामाण्यमेवेति भाट्टमत-सिद्धान्तः ।

'औदुम्बरो यूपो भवति ।' इत्यादौ वाक्यभेदात् कृत्स्नस्य वेदस्य अप्रामाण्यमिति पूर्वपक्ष. । वाक्यद्वयस्यापि सङ्गतिद्वारा एकवाक्यता–

सम्पादनाद्वाक्यभेदो नास्तीति कृत्स्नस्य वेदस्य प्रामाण्यमेवेति प्रभाकर-सिद्धान्तः ।

—:o:—

## हेतुमन्निगदाधिकरणम्

(१-२-३)

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ।२६। पूर्वपक्षसूत्र-मिदम् ।
स्तुतिस्तु शब्दपूर्वत्वात्, अचोदना तस्य ।२७। अर्थे स्तुतिरन्याय्येति चेत् ।२८। अर्थस्तु विधिशेषत्वा-द्यथा लोके ।२९। यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् ।३०। इयन्ति सिद्धान्तसूत्राणि ।

'शूर्पेण जुहोति' 'तेन ह्यन्नं क्रियते[1]' इत्यत्र 'तेन ह्यन्नं क्रियते' इत्ययमर्थवादो हेतुः उत स्तुतिरिति सशयः । तत्र हिशब्दस्य हेतुतावा-चित्वात् विधेये शूर्पे हेतुत्वेनान्वेति । तथा च यद्यदन्नकरण तेन तेन होतव्यमित्यर्थो लभ्यते । तथा च पिठरादिभिस्सह शूर्पस्य विकल्प इति पूर्वपक्ष ।

'शूर्पेण जुहोति' इत्यत्र शूर्पस्य होमसाधनत्व श्रुत्या अवगम्यते । पिठरादीनान्त्वनुमानात् । तस्मादसमानबलत्वाद्विकल्पो न युक्तः । अतश्च स्तुतित्वेनैवान्वय इति भाट्टमतेन सिद्धान्तः ।

*** प्रभाकरमतेन एवमधिकरणरचना ***

'शूर्पेण जुहोति' 'तेन ह्यन्नं क्रियते' इत्यत्र यस्मात् शूर्पः अन्नकरण-

1. J. N. V. P. 26

साधन तस्मात् शूर्पेण जुहोतीत्यर्थः । तथा च अन्नकरणसाधनत्व हेतुरवगम्यते । स च हेतुः यद्यदन्नकरणसाधन तेन तेन होतव्यमिति अनुमानप्रमाणमपेक्षते । तथा च प्रमाणान्तरसापेक्षत्वात् अस्य अप्रामाण्यम् । तत्सामान्यादेव कृत्स्नवेदस्यापि अप्रामाण्यमेवेति पूर्वपक्षः ।

श्रुत्युक्तहेतुस्तु सिद्ध एवास्ति । यद्यदन्नकरणं तेन तेन होतव्य-मिति तु अनुमानात्कल्प्यो भवति । साध्यत्वेनावगम्यमानो होमः श्रुतिनिर्दिष्टहेतुनैव निश्शङ्को भवति । तस्मान्निरपेक्षप्रामाण्यमस्य वाक्यस्य । तत्सामान्यादेव कृत्स्नस्य वेदस्यापि प्रामाण्यमेवेति सिद्धान्त. ।

**मतभेद. :–**

अर्थवादस्य हेतुत्वेनान्वयः उत स्तुतित्वेनेति संशये, हिशब्दस्य हेतुवाचकत्वात्, हिशब्दश्रवणाच्च हेतुत्वेन अन्वयो भवति । तथा च शूर्पस्य दर्वीपिठरादिभिस्सह विकल्प पूर्वपक्षे । शूर्पस्य तु श्रुत्युक्तहोम–साधनत्वमस्ति । दर्वीपिठरादीनान्तु अनुमानात् । तस्मात् श्रुत्यनु–मानयोरसमानबलत्वात् न विकल्प इति भाट्टमतसिद्धान्त ।

हेतोरनुमानसापेक्षत्वाद्वेदस्य अप्रामाण्यमिति पूर्वपक्षः । सिद्धहेतु (शूर्पस्य) परित्यागे कारणाभावादनपेक्षत्वादस्य प्रामाण्यमेवेति प्रभाकर–मतम् ॥

—:o·—

## मन्त्रलिङ्गाधिकरणम्

(१–२–४)

तदर्थशास्त्रात् ।३१। वाक्यनियमात् ।३२। बुद्ध–

शास्त्रात् ।३३। अविद्यमानवचनात् ।३४। अचेतनेऽर्थ-बन्धनात् ।३५। अर्थविप्रतिषेधात् ।३६। स्वाध्यायव-द्वचनात् ।३७। अविज्ञेयात् ।३८। अनित्यसंयोगान्मन्त्रा-नर्थक्यम् ।३९। इयन्ति पूर्वपक्षसूत्राणि ।

अविशिष्टस्तु वाक्यार्थः ।४०। गुणार्थेन पुन श्रुतिः ।४१। परिसंख्या ।४२। अर्थवादो वा ।४३। अविरुद्ध परम् ।४४। संप्रैषे कर्मगर्हानुपलम्भः संस्कारत्वात् ।४५। अभिधानेऽर्थवादः ।४६। गुणादप्रतिषेधः ।४७। विद्या-वचनमसंयोगात् ।४८। सत परमविज्ञानम् ।४९। उक्तश्चानित्यसंयोगः ।५०। लिङ्गोपदेशश्च तदर्थ-त्वात् ।५१। ऊहः ।५२। विधिशब्दाश्च ।५३। इयन्ति सिद्धान्तसूत्राणि ।

अर्थवादप्रामाण्यनिरूपणानन्तरं मन्त्राणामपि धर्माधर्मयो प्रामा-ण्यमस्ति न वेत्ययं विचारः । तत्र मन्त्राणा धर्मे प्रामाण्यमस्ति न वेति संशय । प्रथमं तावत्प्रमाणत्वेनाभ्युपगतयोर्विध्यर्थवादयोर्मन्त्रस्यानन्त-र्भावाद्धर्मे प्रामाण्यमस्ति न वेति मन्त्राणा विचारविषयता सम्पद्यते । तद्यथा–'देवाश्च याभिर्यजते[1]' इत्यादिमन्त्रे यच्छब्दसमभिव्याहारात् यच्छब्दस्य च प्राप्तिद्योतकत्वेन स्वविषये अज्ञातज्ञापनरूपविधिप्रतिबन्ध-कत्वस्य स्पष्टतया न विधायकत्व मन्त्राणाम् । अर्थवादवाक्यानान्तु विध्येकवाक्यतया विध्यपेक्षितार्थसमर्पकत्वेन प्रामाण्यम् । मन्त्राणान्तु दूरस्थत्वाद्विध्येकवाक्यत्वाभावाच्च नार्थवादवत्प्रामाण्यम् । तस्मात्कथं

1. J. N. V. P. 70

प्रामाण्यमिति चेत्–केषाञ्चन अभिप्रायं कुमारिल एवमुक्तवान् । 'अर्थवन्तो मन्त्रा उत अनर्थका[1]' इति संशयः । तत्तु अयुक्तम् ।

स्पष्टे शब्दात्प्रतीतेऽर्थे नानर्थक्यं प्रसज्यते ।
अग्नौ दहति दृष्टे वा दग्धृत्वं किं विचार्यते ।। इति ।

अतः मन्त्रप्रामाण्यविषये अर्थवन्तो मन्त्रा उतानर्थका इति संशयो न युक्त । तस्मात् भाष्यकारोक्त 'किं विवक्षितवचना मन्त्रा उत अविवक्षितवचना मन्त्राः[2]' इत्येव संशयस्साधुरिति च कुमारिलाभिप्रायः । तस्यैव संशयस्य' किम् अर्थप्रकाशनेन यागस्योपकुर्वन्ति, उत उच्चारणमात्रेण[3]' इति च विवरण भाष्येऽस्ति । तस्मात्प्रयोगसमवेतार्थस्मारकत्वमस्ति न वेत्यत्र, अर्थप्रकाशनायैव मन्त्रा इति भाट्टमतम् ।

'उरुप्रथस्व' इत्ययं मन्त्र । तस्यायमाशय. । भोः पुरोडाश त्वमुरु विपुलता यथा भवति तथा प्रथस्व' इत्याद्याशयबोधका मन्त्रा यागेषु उच्चार्यमाणा अदृष्टमेव जनयन्ति । न त्वर्थप्रकाशनाय तदुच्चारणम् । यत 'उरुप्रथस्वेति पुरोडाशं प्रथयति' इति ब्राह्मण–वाक्येनापि पुरोडाशप्रथनलक्षणस्यार्थस्य भासान्मन्त्राणा प्रयोगसमवेतार्थ–स्मारकत्वाभावात् अप्रामाण्यमिति पूर्वपक्षः ।

दृष्टप्रयोजनस्य अर्थप्रत्यायनस्य सम्भवे उच्चारणस्य अदृष्टार्थ–कल्पना न युक्ता । तस्माद्यागप्रयोगे मन्त्रोच्चारणस्य दृष्टार्थानुस्मरणमेव [4]प्रयोजनम् । एवञ्च मन्त्रैरेव मन्त्रार्थ स्मर्तव्यः' इति नियमवशा–

---

1. मीमांसादर्शनम् । P. 44 (1-2-4) 4 J. N. V. P. 25
2. Ibid P. 49 ,,
3 Ibid ,, ,,

न्मन्त्राणान्तु दृष्टमेव प्रयोजनं सम्भवति । नियमस्य तु अदृष्टं प्रयोजन-मस्तु । एवञ्च मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेन धर्मे प्रामाण्यमेवेति भाट्टमतेन सिद्धान्तः ।

अत्र अन्योऽपि विषयः प्रसङ्गाद्वक्तव्यो भवति यत् 'मन्त्रैरेव मन्त्रार्थं स्मर्तव्य'' इति नियमान्मन्त्राणा तत्र तत्र विनियोगसिद्धौ क्वचित् पुनर्विनियोगोऽपि दृश्यते । तस्य च वैयर्थ्यपरिहाराय आक्षेपसमाधान-पूर्वकं सूत्रकारवार्तिककारयोर्मतमत्र दीयते ।

सूत्रकारेण जैमिनिना 'गुणार्थेन पुनः श्रुति.' 'परिसंख्या' इत्याभ्यां सूत्राभ्या मन्त्राणा गुणपरिसख्याद्यर्थत्वेन सार्थक्यमस्तीत्युक्तम् । तद्यथा 'ता चतुर्भिरभ्रिमादत्ते' इत्यत्र यद्यपि सामर्थ्येनैव मन्त्रा. प्राप्ताः, तथापि चतुस्संख्यामादाने विधास्यति । तत्र अरुणैकहायनीन्यायेन परस्पर-नियमे सति मन्त्रगतचतुस्संख्याविशिष्टमादान समुच्चयादृते कर्तुं न शक्यत इति अर्थात्समुदायफलकमिति एव रूपेण एकमुत्तरमदात् कुमारिल. । अपि च यावल्लिङ्गद्वारा श्रुतीः कल्पयित्वा मन्त्रा. प्रवृत्ता भवेयुः तावत्पूर्वमेव अनेन प्रत्यक्षवचनेन चतुस्संख्याविशिष्टा अप्राप्ता मन्त्रा विधीयन्ते इति विनाप्येतेन अर्थात्प्राप्तवत्सु मन्त्रेषु, मन्त्रेण तत्परत्वे मन्द फलमित्य-नन्यलभ्यचतु'सख्यार्थं तस्योपदेश' । इति गुणार्थत्वेन सार्थक्यमस्तीति कुमारिलः द्विधा प्रत्यपादयत् ।

अपि च लिङ्गादेव अग्निचयनाङ्गभूताश्वरशनादाने प्राप्स्यमानस्य मन्त्रस्य ततः पूर्वंप्रवृत्तेव 'इमामगृभ्णन् रशनामृतस्य' इत्यश्वाभिधानी-मादत्ते' इत्यनेन वचनेन मन्त्रविशिष्टादाने अश्वरशनाङ्गत्वेन विहिते पूर्ववत्फलजिज्ञासाया गर्दभरशनारूपशेषिपरिसख्याफलम् । परिसख्या च उभयस्य युगपत्प्राप्तौ अन्यतरव्यावृत्तिरेव । अत्र अश्वरशनायां गर्दभरशनायां च युगपदेव मन्त्रस्य प्रवृत्तौ अनेन मन्त्रेण गर्दभरशना-

निवृतिरेवात्र परिसंख्या । तस्मात्परिसख्यार्थत्वेन अस्य सार्थक्य-मेवेति ।

एवञ्च मन्त्राणा क्वचित्पुनर्विनियोगकरणस्यापि गुणपरिसंख्यार्थ-सार्थक्यं चास्ति । तदेवं मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेन प्रामाण्यमिति सिद्धान्तः ।

अत्रैव मतान्तरेण पूर्वोत्तरपक्षावाह माधवाचार्यः । तस्यैव मन्त्रस्य लिङ्गेन विनियोगे ब्राह्मणवाक्यस्य अविवक्षा इत्येवमुभयोर्विरोधात् चोदनाया अप्रामाण्यमिति पूर्वपक्षः । लिङ्गेन विनियोगसिद्धौ वाक्यस्य अनुवादकत्वमेव । एवञ्च विरोधाभावात् चोदनायाः प्रामाण्यमेवेति सिद्धान्तः ।

प्रभाकरमतमप्येवमेव वर्तते ।

**मतभेदः** :- अतिव्याप्त्यव्याप्तिदोषनिवृतिपुरस्सर मन्त्रलक्षणम् । मन्त्राणा प्रयोगसमवेतार्थत्वेनार्थत्वाभावादप्रामाण्यमेवेति पूर्वपक्षः । प्रयोगसमवेतार्थत्वस्य सत्त्वात्प्रामाण्यमेवेति सिद्धान्तः भाट्टमते ।

लिङ्गेन विनियोगे वाक्यस्य, वाक्येन च विनियोगे लिङ्गस्य च अविवक्षा भवति । तस्मादुभयोर्विरोधात् चोदनाया अप्रामाण्यमिति पूर्वपक्षः । मन्त्रस्य लिङ्गेन विनियोगे वाक्यस्य अनुवादकत्वेन च विरोधाभावात्प्रामाण्यमेव चोदनाया इति मतान्तर माधवाचार्येण प्रतिपादितम् ।

—:o:—

## प्रथमाध्यायस्य द्वितीयपादाधिकरणेषु प्रतिपादिता विषया:

१. अर्थवादाना प्रामाण्य प्रथमाधिकरणे निरूपितम् ।

२. द्वितीयाधिकरणे विधिवन्निगदानां प्रामाण्य निरूपितम् ।

३. तृतीयाधिकरणे हेतुमन्निगदाना प्रामाण्य निरूपितम् ।

४. चतुर्थाधिकरणे मन्त्राणा प्रामाण्यं निरूपितम् ।

द्वितीय· पादः समाप्तः

—.o:—

## अथ प्रथमाध्यायस्य तृतीयः पादः

### स्मृतिप्रामाण्याधिकरणम्

(१-३-१)

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ।१। इदं पूर्वपक्षसूत्रम् । अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ।२। इदं सिद्धान्तसूत्रम् ।

मन्वादिप्रणीतानां स्मृतीनां प्रामाण्यमस्ति न वेति विचारोऽत्र क्रियते । यतः स्मृत्युक्ताष्टकाश्राद्धमनुष्ठीयते । अतः स्मृतिः धर्मे प्रमाणं न वेति संशयः । तत्र 'अष्टकाः कर्तव्याः' इत्यादिवाक्यं पौरुषेयम्, मूलप्रमाणरहित च, विप्रलम्भकवाक्यवत् । तस्माद्धर्मे प्रामाण्यं नास्ति । ननु वेदार्थ एव स्मृत्या उच्यते । न । वेदेनैव वेदार्थावगतौ स्मृतिरनर्थैव । अतश्च अनुवादकत्वाच्च अप्रामाण्यमेव स्मृतेर्धर्मविषये इति पूर्वपक्षः ।

सिद्धान्त :—विमता स्मृतिः वेदमूला, वैदिकमन्वादिप्रणीतस्मृतित्वात् उपनयनाध्ययनादिस्मृतिवत्[1] इति अनुमानाद्वेदमूलत्वस्य वैयर्थ्यं न

---

1. J. N. V. P. 27

शङ्कनीयम् । यतः बहुष्वपि प्रत्यक्षाप्रत्यक्षवेदेषु ये विप्रकीर्णानुष्ठेयार्थास्सन्ति, ते सर्वेऽपि एकत्र संक्षिप्य लभ्यन्ते । तस्मात्स्मृतिः धर्मे प्रमाणमिति भाट्टमतम् ।

**मतान्तरेण अधिकरणरचना :–**

स्मार्तस्य अष्टकाश्राद्धस्य 'या जनाः प्रतिनन्दन्ति' इत्यय मन्त्रोऽङ्गम् । तत्प्रतिपादकं वेदावाक्यं नास्तीति सोऽयं मन्त्रः धर्मे प्रमाणं न भवति । इति पूर्वपक्षः । पूर्वोक्तसिद्धान्तानुमानवदेव अत्रापि मूलमनुमेयम् । तस्मादस्य मन्त्रस्यापि प्रामाण्यमेवेति सिद्धान्त. ।

**प्रभाकरमतम् .–** रात्रिदेवताप्रकाशनद्वारा 'यां जनाः प्रतिनन्दन्ति' इत्ययं मन्त्रः अष्टकाकर्मसम्बद्धोऽस्ति । 'अष्टकाः कर्तव्या.' इतीदं पौरुषेयं वाक्यं च प्रमाणान्तरसापेक्षमस्ति । तस्मात् सापेक्षत्वान्मन्त्रस्य निरपेक्षप्रामाण्यं नास्ति । तथा च 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायात् सर्वस्यापि वेदस्य अप्रामाण्यमिति पूर्वपक्षः ।

मन्वादयस्तु स्ववचसां वेदमूलत्वमेव प्रतिजानतें–

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।

स सर्वोऽभिहितो वेदे सर्वज्ञानमयोहि सः[1] ।। इति । तस्मात् 'यां जनाः प्रतिनन्दन्ति' इत्यस्य मन्त्रस्य निरपेक्षात् कार्यावगमात् प्रामाण्यमेव । तस्मात्तत्सामान्यात्सर्वस्यापि वेदस्य प्रामाण्यमेवेति प्रभाकरमते सिद्धान्तः ।

**मतभेद :–** स्मृतीनां धर्मे प्रामाण्यमस्ति न वेति संशये मूलश्रुतेः

---

1. बृहती P. 80
   (पञ्चिकाव्याख्याने)

अभावात् अष्टकाकर्मण. अप्रामाण्यमेवेति पूर्वपक्षः । 'विमता स्मृतिः वेदमूला, वैदिकमन्वादि स्मृतित्वात्, उपनयनाध्ययनादिस्मृतिवत्' इत्यनुमानात् स्मृतेर्वेदमूलकत्वकल्पनाद्वारा प्रामाण्यसिद्धिः भाट्टमते ।

मन्त्रस्य अष्टकाश्राद्धाङ्गत्वात् तत्प्रतिपादकवेदवाक्याभावाच्च मन्त्रस्य धर्मे अप्रामाण्यमिति पूर्वपक्षः । सिद्धान्तस्तावत् भाट्टमतसमान– एवास्ति । इदं मतान्तरे ।

'या जनाः प्रतिनन्दन्ति' इत्यस्य मन्त्रस्य देवताप्रकाशनद्वारा अष्टकाश्राद्धसम्बन्धात् 'अष्टकाः कर्तव्याः' इत्यस्य पौरुषेयवचनस्य प्रमाणान्तरसापेक्षत्वाच्च, मन्त्रस्य तत्सामान्यात्सर्वस्यापि वेदस्य अप्रामाण्यमेवेति पूर्वपक्षः । स्ववचसा वेदमूलत्वं मनुना सम्प्रकीर्तितत्वात्, तस्मादेव सापेक्षाभावाच्च मन्त्रस्य तत्सामान्यात्सर्वस्यापि वेदस्य च प्रामाण्यमेवेति प्रभाकरमतम् । अस्मिन् मते सर्वस्यापि वेदस्य प्रामाण्याप्रामाण्यविचारः कृतः ।

—:o:—

## श्रुतिप्राबल्याधिकरणम्

(१–३–२)

विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ।३। इदं सिद्धान्तपरं सूत्रम् ।

यदि स्मृत्युक्तस्यापि मूलश्रुतिकल्पनाद्वारा प्रामाण्यं, तदा श्रुतिविरुद्धस्यापि स्मृतेः प्रामाण्यमस्ति । यतः सर्वस्यामि स्मृतेः प्रामाण्यस्य पूर्वाधिकरणे साधितत्वात् । तद्यथा :- ज्योतिष्टोमे सदो नामकस्य मण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तस्याश्च वाससा वेष्टनं औदुम्बरी

सर्वविष्टयितव्या[1]' इति स्मृत्या स्मर्यते । तस्मादष्टकादिवदत्रापि मूलभूतवेदः कल्पयितुं शक्यत इति स्मृतिरपि धर्मे प्रमाणमिति पूर्वपक्षः ।

सिद्धान्त :– 'औदुम्बरी स्पृष्ट्वा उद्गायेत्' इति प्रत्यक्षश्रुत्या स्पर्शो विधीयते । स च स्पर्शस्सर्ववेष्टने न सम्भवति । अतः श्रुत्या सह विरोधात्, मूलश्रुतेरभावाच्च तस्यास्स्मृते. अप्रामाण्यमिति भाट्टमत–सिद्धान्तः ।

माधवाचार्येण मतान्तरपुरस्सरं इदमधिकरणमेव प्रतिपादितम् ।

प्रत्यक्षानुमितश्रुत्योः परस्परविरोधात् उभयोरप्रामाण्यमिति पूर्वपक्ष । अनुमानस्य कालात्ययापदिष्टतया विरुद्धश्रुत्यभावन स्पर्शश्रुतिः स्वार्थे प्रमाणम् । ननु पुरुषान्तरप्रत्यक्षवेदः अस्या· स्मृतेः मूलम् । इति स्मृतेः मूलसम्भवात्प्रामाण्यं सिद्धयति । इति चेन्न । परप्रत्यक्षापेक्षया स्वप्रत्यक्षस्य अभ्यर्हितत्वेन स्पर्श एवात्र अनुष्ठेय·, न तु सर्ववेष्टनम् ।

**प्रभाकरमतम्** :– स्पर्शसर्ववेष्टनयोः प्रत्यक्षानुमितश्रुतिस्मृत्योः परस्परविरोधादुभयोरप्रामाण्यमिति पूर्वपक्षः । प्रत्यक्षश्रुत्या बाधात्स्मृतेर्मूलानुमानं न सम्भवति । अपि तु स्मृतेः भ्रान्तिमूलतैव । तथा च न सर्वत्रापि भ्रान्त्यादिमूलत्वम्, किन्तु यत्र हि वेदमूलत्व नास्तीति बलवता प्रमाणेन ज्ञायते तत्रैव भ्रा·तिमूलत्वकल्पना इति प्रभाकरमतम् ।

**मतभेद** :– अष्टकादिस्मृतिवदेव सर्ववेष्टनस्मृतेरपि प्रामाण्यमेवेति पूर्वपक्षः स्मृत्युक्तसर्ववेष्ठनस्य श्रुत्युक्तस्पर्शेन सह विरोधे श्रुतिस्मृत्योर्मध्ये,

1. J. N. V. P. 28

स्मृतेर्मूलाभावादनुमानस्य च कालात्ययापदिष्टत्वात् श्रुत्युक्त स्पर्श एव–कर्तव्य इति भाट्टमतसिद्धान्तः ।

श्रुतिस्मृत्योर्विरोधत् उभयोरप्रामाण्यमिति पूर्वपक्ष. । परप्रत्यक्ष-वेदो यदि सर्ववेष्टने मूलमिति कथ्यते तदा प्रामाण्य भवत्येव । तथापि परप्रत्यक्षापेक्षया स्वप्रत्यक्षस्याभ्यर्हितत्वात् स्पर्श एवानुष्ठेय·, न तु सर्ववेष्टनम् । इति माधवाचार्यैः[1] प्रतिपादितमतान्तरसार. ।

---

## दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम

(१–३–३)

हेतुदर्शनाच्च ।४। इद सिद्धान्तपर सूत्रम् ।

विरुद्धप्रत्यक्षश्रुत्यभावात् 'वैसजनहोमीय वासोऽध्वर्युः प्रतिगृह्णाति' इत्यादिस्मृतेः अष्टकास्मृतिवत्प्रामाण्यमेवेति पूर्वपक्ष. ।

कदाचिदध्वर्युः लोभादेतद्वासो जग्राह । अतः अस्याः स्मृतेरपि लोभमूलत्वसम्भवात् श्रुतिमूलकत्वकल्पना न युक्ता । एवञ्चास्याः स्मृते' धर्मे प्रामाण्य नास्तीति भाट्टमतेन सिद्धान्तः ।

'हेतुदर्शनाच्च' इत्यस्य सूत्रस्य शबरस्वमिना अधिकरणान्तरेण भाष्यं न कृतम् । ततश्च 'अधिकरणान्तर[2] वा' इति पुन. व्याख्याम-

---

1. J. N. V. P. 29

2. बृहती P. 91

करोत् । अतश्च माधवाचार्यः भाट्टमतानुसारं हेतुदर्शनाच्च' इतीदं सूत्रं अधिकरणान्तरेणैव विवृतवान् ।

प्रभाकरस्तु इदं सूत्र अधिकरणान्तरेण न जग्राह ।
पार्थसारथिनापि भाट्टमतमेव अस्मिन्नधिकरणे गृहीतम् ।

—:o:—

## पदार्थप्राबल्याधिकरणम्

(१–३–४)

शिष्टाकोपे विरुद्धमिति चेत् ।५। न, शास्त्रपरिणाम-त्वात् ।६। इदं सूत्रद्वयं पूर्वपक्षपरम् ।

अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।७।

इद सिद्धान्तपरम् ।

नैमित्तिकाचमनादीना अनुष्ठेयत्वेन प्रामाण्यमस्ति न वेति संशयः । 'क्षुते आचामेत्' इति तु पुरुषार्थमाचमनम् । 'आचान्तेन कर्तव्यम्' इति स्मृतेर्यदि क्रतुमध्यगतनिमित्तं स्यात् तदा नैमित्तिकमाचमनं कार्यम् । तस्मात्स्मृतिर्धर्मप्रमाणमिति चेन्न । यतः 'वेद कृत्वा वेदिं करोति' इति श्रुतौ वेदकरणानन्तर वेदिकरणमिति क्रम. प्रतीयते । अतः वेदकरणा-नन्तरं वेदेः पूर्व यदि क्षुन्निमित्तकमाचमन क्रियेत, तदा श्रुत्युक्तनैरन्तर्यस्य बाधात् स्मृतेर्धर्मे प्रामाण्य नास्तीति पूर्वपक्षः ।

सिद्धान्तः :– श्रुत्युक्तवेदवेद्यादिपदार्थवदेव स्मृत्युक्ताचमनादयोऽपि

पदार्था अनुष्ठेया एव । क्रमस्तु न श्रुत्युक्तः, किन्तु पदार्थनिष्ठो धर्मः । स च पदार्थानुपजीवति । तस्मादुपजीव्यविरोधात् क्रम एव बाध्यते । ततश्च अस्यास्मृतेर्धर्मे प्रामाण्यमेवेति भाष्यकारमतम् ।

अत्रैव वार्तिककारः प्रकारान्तरेण विचारद्वयमकरोत् । तत्राय प्रथमो विचार । 'ब्रह्मचर्यमहिसा च'[1] इत्यादिश्रुतौ अहिंसायाः धर्मत्व-मुक्तम् । शाक्याना मतेऽपि अहिसाया धर्मत्वमस्त्येव । तस्मात् शाक्य-स्मृतिरपि धर्मे प्रमाणमेवेवि पूर्वपक्षः । गोक्षीरन्यायेन स्वरूपेण धर्मस्यापि अहिंसायाः, शाक्यसम्बन्धादधर्मत्वप्रसङ्गः । अतः तदीयग्रन्थेन अहिंसा-दिर्नावगन्तव्य इति तस्याः स्मृतेर्धर्मे प्रामाण्यं नास्तीति सिद्धान्तः ।

द्वितीयो विचार :– होलाकोत्सवादिसदाचारस्य धर्मे प्रामाण्य-मस्ति न वेति संशयः । मूलभूतवेदाभावादप्रामाण्यमिति पूर्वपक्षः । शिष्टपरिगृहीतत्वेन अष्टकादिवदेव वेदमूलत्वमस्त्येव । 'श्रुति. स्मृतिः सदाचार' इत्यत्र सदाचारस्यापि धर्मे प्रामाण्यस्य सामान्याकारेण उपदिष्टत्वात्, ग्रन्थगौरवभिया विशेषाकारेण नोक्त इति शिष्टाचार-स्यापि धर्मे प्रामाण्यमस्त्येवेति सिद्धान्त. । शिष्टाः वेदप्रामाण्याभ्युपगन्तार इत्यर्थः ।

**प्रभाकरमतम्** :– 'वेद कृत्वा वेदि करोति' इत्यत्र श्रुतिपरिच्छिन्न-क्रममध्ये स्मार्तक्षुन्निमित्तकाचमनेक्रियमाणे शास्त्रपरिच्छिन्ना प्रधानकालता विरुध्यते इति पूर्वपक्षः । प्रथमत श्रौतस्मार्तात्मके अनुष्ठेयस्वरूपे अवगते पश्चात् क्रमकल्पनाया अपेक्षा भवति । अतः पदार्थैस्सह क्रमस्यावि-रोधात् सर्वस्यापि प्रामण्यमेवेति प्रभाकरमतम् ।

---

1. J. N. V. P. 30

मतभेद :– (१) 'वेदं कृत्वा वेदिं करोति' इत्यत्र क्त्वाप्रत्ययेन यन्नैरन्तर्यं प्रतीयते, तत् क्षुन्निमित्तकाचमनपदार्थानुष्ठानेन बाध्यते । इति स्मृतेरप्रामाण्यमिति पूर्वपक्षः । उपजीव्यविरोधात् क्रमएव बाध्यते, न तु स्मार्तपदार्था इति भाष्यमतसारः ।

(२) शाक्योक्ताहिंसाया धर्मे प्रामाण्यमस्ति न वेति संशयः । श्रुत्युक्ताहिंसाया एव तत्र प्रतिपादनात्प्रामाण्यमिति पूर्वपक्ष । शाक्य–सम्बन्धादेव अप्रामाण्य शाक्योक्ताहिंसाया इति भाट्टमते प्रथमप्रकारः ।

(३) अपि च सदाचारमूलकस्य होलाकाचारस्य प्रामाण्यं न वेति संशयः । स्मृत्युक्तत्वाभावान्नास्ति प्रामाण्यमिति पूर्वपक्षः । शिष्टपरि–गृहीतत्वात् सदाचारप्रामाण्यस्य सामान्येन उपदिष्टत्वाच्च प्रामाण्यमेवेति भाट्टमते द्वितीयप्रकारसारः ।

(४) श्रुतिपरिच्छिन्नक्रमविरोधात् स्मृतेरप्रामाण्यमिति पूर्वपक्ष. । अनुष्ठेयपदार्थस्वरूपावगतेरनन्तरमेव क्रमापेक्षा भवति । तस्माद–विरोधात्प्रामाण्यमेवेति प्रभाकरमतसार ।

——

## शास्त्रप्रसिद्धार्थप्रामाण्याधिकरणम्

(१–३–५)

### (आर्यम्लेच्छाधिकरणम्)

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्यात् ।८।
इदं पूर्वपक्षपर सूत्रम् ।

शास्त्रस्था वा तन्निमित्तत्वात् ।९।

इदं सिद्धान्तपरं सूत्रम् ।

'यवमयश्चरूर्भवति'[1] 'वारानही उपानहावुपमुञ्जते' इति श्रूयते । तत्र यववराहशब्दौ आर्यम्लेच्छाभ्यामुभयत्र प्रयुक्तौ । आर्यास्तु यवशब्दार्थं दीर्घशूके, वराहशब्दं च सूकरे प्रयुञ्जते । तथैव म्लेच्छाः यवशब्दं प्रियङ्गुषु, वराहशब्दं न कृष्णशकुने प्रयुञ्जते । तस्माल्लोकव्यवहारादेव अर्थनिर्णयो भवति । अतः आर्यम्लेच्छयोस्तुल्यबलत्वाद्विकल्प इति पूर्वपक्ष ।

**सिद्धान्तः** :– 'यवमयश्चरूर्भवति' इति विधेः 'यत्रान्या ओषधयो म्लायन्ते' अथैते मोदमाना इवोत्तिष्ठन्ति[2]' इत्यर्थवादः श्रूयते । एवमेव वारानहीस्थलेऽपि । तस्मात् यवादिशब्दार्थनिर्णयत्वेन शास्त्रस्योपलम्भात् यववराहादिशब्दानां दीर्घशूकसूकराद्यर्थेष्वेव प्रयोग इति भाष्यमतेन– विषयविचार ।

**प्रभाकरमतम्** :– 'यवमयश्चरूर्भवति' इत्यत्र यवशब्दार्थविप्रति– पत्तौ कि सर्वस्यापि वेदस्य अप्रामाण्य उत न वेति सशय. । वाक्यशेषस्तु प्रयोगसशय निवर्तयति । नाभिधानसशयम् । अत्र च व्यवहार- विप्रतिपत्त्या अभिधानसशयो भवति । एव च शिष्टानामेकत्र प्रयोगः अशिष्टानामन्यत्र प्रयोग इति निमित्तविप्रतिपत्तेस्सत्त्वात् अनध्यवसायाद- प्रामाण्य सर्वस्यापि वेदस्येति पूर्वपक्षः ।

**सिद्धान्त** :– नात्र अनध्यवसायादप्रामाण्यम् । यतः म्लेच्छ-

---

1. J. N. V. P. 31
2. Ibid ,,

प्रतिपत्ते वेदविरोधेन अप्रामाण्यात्, वाक्यशेषादेव यवशब्दार्थनिर्णय इति सिद्धान्तः ।

**भाष्यप्राभाकरमतयोर्भेद. :–**

आर्यम्लेच्छयोस्तुल्यबलत्वाद्विकल्प इति भाष्यमतेत पूर्वपक्ष । यवशब्दार्थस्य विप्रतिपत्तौ सत्या अध्यवसायाभावात्सर्वस्यापि वेदस्य अप्रामाण्यमिति प्रभाकरमते पूर्वपक्षः । अर्थनिर्णायकशास्त्रोपलम्भा–द्विकल्पो नास्तीति भाष्यमतसिद्धान्तः । अनध्यवसायाभावात्प्रामाण्यमेव सर्वस्यापि वेदस्येति प्रभाकरमतेन सिद्धान्त इति ।

'सन्दिग्धेषु वाक्यशेषात्'[1] इत्यनेन सूत्रेण भाष्यकारोक्तस्य उदाहरणस्य सार्थक्यं भवतीति इममुदाहरणं परित्यज्य अन्यथा प्रकारत्रयेण कुमारिलः प्रत्यपादयत् । पूर्वोदाहरणपरित्यागे कारणान्तरं च उक्तवान् । 'तत्सिद्धिसूत्रे सारूप्यादीनां गौणवृत्तिनिमित्तानामनुक्रमणाद्वेतससदृशजम्बू-प्रत्ययसिद्धिः अशब्दार्थत्वेऽपि विज्ञायत एवेति नोदाहृतेन कार्यम्'[2] इति ।

तत्र प्रथमप्रकार :– पीलुशब्द आर्या वृक्षे, म्लेच्छाः हस्तिनि प्रयुक्तवन्तः । तर्हि को वा अर्थः परिग्राह्य इति संशयः । उभयोस्तुल्य-बलत्वात् अर्थद्वयेऽपि पीलुशब्दप्रयोगः कर्तव्य इति पूर्वपक्षः । आर्यव्यवहारस्य अविप्लुतत्वात् आर्यप्रयोगानुसारं पीलुशब्दस्य वृक्षे एव प्रयोग इति सिद्धान्तः ।

---

1. मीमांसादर्शनम् । 1-4-29
2. मीमांसादर्शनम् । P. 143 (स वा शा.)

द्वितीयः प्रकार :– पूर्वाधिकरणोक्तशिष्टाचारप्रामाण्य पुनराक्षिप्य समाधीयते । दक्षिणदेशे मातुलदुहितारं परिणयन्ति शिष्टाः । तस्मात्तस्य आचारस्य शिष्टजनपरिगृहीतत्वात् प्रामाण्यमेवेति पूर्वपक्ष । अस्य शिष्टाचारस्य स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात् अप्रामाण्यमेव । स्मृतिस्तु :–

मातुलस्य सुतामूढ्वा मातृगोत्रा तथैव च ।
समानप्रवरा चैव त्यक्त्वा चान्द्रायणं व्रजेत्[1] ।। इति ।

न च स्मृतेर्वेदमूलकल्पनाद्वारा प्रामाण्यवदेव मातुलकन्यापरिणयाचारस्यापि मूलवेदानुमानात्प्रामाण्यमिति वाच्यम् । स्मृतेस्तु मूलवेदकल्पनायां विरोधो नास्ति । आचारस्य तु प्रथमं स्मृतिकल्पना, ततश्च श्रुतिकल्पना इति ह्यन्तरितप्रामाण्यकल्पना भवति । अपि च स्मृत्या सह विरोधाच्च प्रामाण्यं नास्ति । तस्मान्मातुलकन्यापरिणयो निषिद्ध इति ।

तृतीयप्रकार :– 'त्रिवृद्बहिष्पवमानम्[2]' इति श्रुतौ त्रिवृच्छब्दस्य लोकात् त्रैगुण्यरूपोऽर्थः गृह्यते, उत अर्थवाद (वाक्यशेष) वशात् ऋचां नवकमर्थो वेति लोकवाक्यशेषयोरर्थविप्रतिपत्तेस्सत्त्वात्कोवाऽर्थः अत्रेति संशय । वेदार्थनिर्णये वेदस्य प्राबल्येऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलत्वाद्विकल्प इति पूर्वपक्षः । लौकिकार्थस्वीकारे अर्थवादार्थेन सह विध्यर्थस्य विरोधात् एकवाक्यत्व न भवति । तथा च एकवाक्यतालाभाय ऋचा नवकमेव विधिगतत्रिवृच्छब्दार्थः । न तु त्रैगुण्यमिति सिद्धान्तः ।

---

1. J. N. V. P. 32
2 Ibid ,,

प्रकारत्रये भेदः :– आर्यम्लेंच्छयोः व्यवहारभेदे म्लेच्छव्यवहारस्य अप्रामाण्यम् । स्मृतिशिष्टाचारयोः विरोधे शिष्टाचारस्य अप्रामाण्यम् । लोकवाक्यशेषयो· विरोधे लौकिकार्थस्य अप्रामाण्यमिति प्रकारत्रये भेदः ।

—:o:—

## म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम्

(१–३–६)

### (पिकनेमाधिकरणम्)

चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ।१०।

इदं सिद्धान्तरपरं सूत्रम् ।

पिकादिशब्दाना आर्यप्रसिद्धार्थाभावात् अर्थः कल्प्यः उत म्लेच्छ–रूढितः ग्राह्यो वेति सशयः । म्लेच्छव्यवहारे विप्लुतिदर्शनान्न तत्प्रसिद्धार्थ-ग्रहणम् । किन्तु पिकादिशब्दाना निगमाद्यङ्गैः अर्थः कल्पनीय एवेति पूर्वपक्ष ।

**सिद्धान्तः** :– कल्प्यार्थापेक्षया रूढ्यर्थग्रहणे एव लाघवात्, आर्य-प्रसिद्धिविरोधाभावाच्च पिकशब्दस्य कोकिल इत्येव रूढ्यर्थो गृह्यते । यत्र ईदृशी अपि रूढिर्न भवति, तत्र नियमादिभिरर्थः कल्पनीयत्वेन तेषां तेषां सार्थक्यमिति भाट्टमतेन सिद्धान्त ।

एवमेव नेमशब्दः अर्धवाची । तामरसशब्द. पद्मवाची इति ।

**प्रभाकरमतम्** :– पिकादिशब्दानामर्थाभावात् 'पिकमालभेत'

इत्यस्या: पिकालम्भनचोदनाया अप्रामाण्यमिति पूर्वपक्षः । 'अप्रतिपक्ष-व्यवहारसिद्धमपि निमित्तमेव वेदार्थावगतौ[1]' इति । अतः म्लेच्छप्रसिद्धार्थ-ग्रहणेन पिकादिशब्दानामर्थबोधकस्य सिद्धत्वात्पिकालम्भनचोदनायाः प्रामाण्यमेव ।

- **मतभेद** :– अनार्यव्यवहारग्रहणापेक्षया कल्प्यार्थ एव गृहीतव्य इति भाट्टमते पूर्वपक्ष: । अर्थाभावात्पिकालम्भनचोदनाया. अप्रामाण्यमिति प्रभाकरमते पूर्वपक्ष । कल्प्यार्थापेक्षया रूढ्यर्थग्रहणे लाघवात् म्लेच्छप्रसिद्धार्थ एव गृहीतव्य इति भाट्टमतम् । म्लेच्छप्रसिद्धार्थग्रहणेन अर्थसद्भावात् पिकालम्भनचोदनाया: प्रामाण्यमिति प्रभाकरमतम् ।

—:o:—

## कल्पसूत्राणामस्वत प्रामाण्याधिकरणम्

(१–३–७)

प्रयोगशास्त्रमिति चेत् ।११। इद पूर्वपक्षसूत्रम् । नासंनियमात् ।१२। अवाक्यशेषाच्च ।१३। सर्वत्र च प्रयोगात्सन्निधानशास्त्राच्च ।१४। इयन्ति सिद्धान्त-सूत्राणि ।

बोधायनापस्तम्बादीना कल्पसूत्राणा, निगमादिषडङ्गानां, मन्वा-दिस्मृतीनां च स्वतःप्रामाण्यमस्ति न वेति सशय । तस्मात्तेषां किं पौरुषेयत्वं उत अपौरुषेयत्वमिति विचारः कर्तव्यो भवति । तत्र कल्पसूत्राणां, षडङ्गाना, स्मृतीनां च अपौरुषेयत्वाद्वेदवत्प्रामाण्यमेव ।

---

1. बृहती P. 106

धर्मबुद्धिजनकत्वात् । न च मूलप्रमाणसापेक्षताया सत्त्वात् वेदवैष–म्यमिति वाच्यम् । उत्पन्नायाः बुद्धेः स्वतः प्रामाण्याङ्गीकारेण निरपेक्ष–त्वात्प्रामाण्यसिद्धि· इति पूर्वपक्ष. ।

**सिद्धान्त** .– अनुमानस्य कालात्ययापदिष्टत्वात् आपस्तम्बम्, बौधायनम्, इति पुरुषनाम्ना ते ग्रन्था उच्यन्ते । अतश्च पौरुषेयत्वात् वेदमूलकत्वेन प्रामाण्यं सिद्धचति । न तु स्वतः प्रामाण्यसिद्धिरिति भाट्टमतम् ।

**प्रभाकरमतम्** – 'सर्वासु तिथिषु अमावास्या कर्तव्या'[1] इत्यनेन वाक्येन सर्वतिथौ यागकर्तव्यता प्राह कल्पसूत्रकार· । 'अमावास्यायां अमावास्यया कर्तव्या' इत्यनया श्रुत्या अमावास्यायां अमावास्ययैव कर्तव्या इत्यर्थो ज्ञायते । ततः कल्पसूत्रेण वेदेन अस्याः श्रुतेर्विरुद्धत्वात् श्रुतेः प्रामाण्य नास्तीति पूर्वपक्षः । नाद्यापि कल्पस्य वेदत्व सिद्धम् । किन्तु प्रयत्नसाध्यम् । कल्पसूत्रेषु पौरुषेयत्वसमाख्यया पुरुषकर्तृकत्वं दृश्यते । तस्मात् कल्पसूत्रस्य दुर्बलत्वात् श्रुते. प्रामाण्यमेवेति ।

**मतभेदः** '– कल्पसूत्रादीनां धर्मबुद्धिजनकत्वेन वेदवदेव प्रामाण्य-मिति पूर्वपक्षः भाट्टमते । कल्पसूत्रकारवचनविरोधात् श्रुतेः अप्रामाण्य–मिति प्रभाकरमते पूर्वपक्ष. । समाख्यावशात् पौरुषेयत्वेन न स्वतः प्रामाण्यम् । किन्तु वेदमलत्वेन धर्मे प्रामाण्य कल्पसूत्रादीनामिति भाट्टमतम् । कल्पसूत्राणा वेदत्वस्य प्रयत्नसाध्यत्वेन दुर्बलत्वात् श्रुतेः प्रामाण्यमेवेति प्रभाकरमतम् ।

—:o.—

---

1. J. N. V. P. 34

## होलाकाधिकरणम्

(१-३-८)

अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाण स्यात् ।१५।
इदं पूर्वपक्षसूत्रम् ।

अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ।१६। दर्शनाद्विनियोग स्यात् ।१७। लिङ्गाभावाच्च नित्यस्य ।१८। आख्या हि देशसयोगात् ।१९। न स्याद्देशान्तरेष्विति चेत् ।२०। स्याद्योगाख्याहि मायुरवत् ।२१। एकधर्मो वा प्रवणवत् ।२२। तुल्य कर्तृधर्मेण ।२३। इयन्ति सिद्धान्तपरसूत्राणि ।

होलाकाद्याचारस्य अवस्थित प्रामाण्यमुत सर्वसाधारण्य वेति सशयः। होलाकाचारः प्राच्यैरेव क्रियत इति देशविशेषे आचारस्य दर्शनात् अवस्थितं प्रामाण्यमेवेति पूर्वपक्षः ।

**सिद्धान्त** :– अनुमितमूलवेदस्य सर्वसाधारणत्वेन, सर्वसाधारण एव होलाकोत्सव । अतः होलाकोत्सवस्य सर्वसाधारण्येन प्रामाण्यमिति भाट्टमतम् । एवमेव अन्येषामपि आचाराणा मूलवेदानुमानद्वारा सर्वसाधारण्येन प्रामाण्य सिद्ध्यति ।

**प्रभाकरमतम् :–** होलाकोत्सवः प्राच्यैरेव अनुष्ठीयत इति मूलवेदमपि प्राच्यादिपदयुक्तमेव अनुमातव्यम् । ततश्च श्रौतप्राच्य-शब्दस्य निर्णीतार्थाभावादप्रमाण श्रुतिरिति पूर्वपक्षः । सर्वदा अनुष्ठान-सामान्यमेव मूलश्रुतिकल्पकम् । एवञ्च प्राच्यादिपदाभावेऽपि अर्थ-बोधानुमितश्रुति. प्रमाणमेवेति सिद्धान्तः ।

**मतभेदः :–** होलाकोत्सवस्य देशविशेषे दर्शनात् व्यवस्थितं प्रामाण्यमिति भाट्टमते पूर्वपक्षः । श्रुत्युक्तप्राच्यादिपदस्य अर्थबोधाभावत् अप्रमाण श्रुतिरिति प्रभाकरमते पूर्वपक्षः । मूलानुमानस्य सर्वसाधारण–त्वेन होलाकोत्सवस्यापि सर्वसाधारणत्वेन प्रामाण्यमेवेति भाट्टमतम् । अर्थबोधानुमिताश्रुति. धर्मे प्रमाणमिति प्रभाकरमतम् ।

—:o:—

## साधुपदप्रयुक्त्यधिकरणम्

(१–३–९)

प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ।२४। इद पूर्वपक्षपरं सूत्रम् ।

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ।२५। अन्यायाश्चानेकशब्दत्वम् ।२६। तत्र तत्त्वमभियोग-विशेषात्स्यात् ।२७। तदशक्तिश्चानुरूपत्वात् ।२८। एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ।२९। इयन्ति सिद्धान्तपराणि सूत्राणि ।

साधुप्रयोगनियमोऽस्ति न वेति संशयः। तत्र व्याकरणाभिज्ञाः गोशब्द सानादिमद्वस्तुनि प्रयुज्यन्ते। तदनभिज्ञास्तु तत्तद्देशीयभाषानु-सारेण 'गावी' 'गोणी' त्यादिप्रयोगान् कुर्वन्ति। तस्मादर्थे प्रयोगे च नियामकाभावात् न व्याकरणस्य प्रामाण्यमिति पूर्वपक्ष ।

**सिद्धान्तः** :– 'साधूनेव प्रयुञ्जीत नापभ्रशान्' इत्यस्ति प्रयोगे नियमः। 'एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति।' इति 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः।' इति साधुशब्दप्रयोगे अपशब्दप्रयोगे च गुणदोषवाक्ययोः दर्शनात् प्रयोगनियमोऽस्ति । अपि च 'गवाद्या एव साधवः, न तु गाव्यादयः' इत्येवं साधुत्वे नियमोऽप्यस्ति। तस्मात् प्रयोगे साधुत्वे च नियमसम्भवात् व्याकरणस्य प्रामाण्यमेवेति भाट्टमतम्।

**प्रभाकरमतम्** :– 'अश्वमालभेत' इत्यत्र अश्वपदान्तर्गताकार–वकारयोर्मध्यवर्तिनो वर्णस्य दन्त्यत्वे स्वशब्दस्य धनमित्यर्थः। तद्रहित दरिद्रमालभेत इत्यर्थो लभ्यते । तालव्यत्वे तुरङ्गगणवाचित्वम् । ततश्च संशयादप्रामाण्यमिति पूर्वपक्षः । अशू व्याप्तौ इत्यस्माद्धातोः औणादिके वप्रत्यये तालव्यत्वं मध्यवर्णस्य भवतीति वैयाकरणाः वदन्ति । ततश्च संशयाभावात्प्रामाण्यमिति प्रभाकरमतम्।

**मतभेदः** :–साधुशब्दप्रयोगनियमाभावात् न व्याकरणस्य प्रामाण्य-मिति भाट्टमते पूर्वपक्षः। अर्थसंशयादप्रामाण्य वेदस्येति प्रभाकरमते पूर्वपक्षः । साधुप्रयोगनियमसंभवात् व्याकरणस्य प्रामाण्यमेवेति भाट्टमतम् । अर्थसंशयाभावात् प्रामाण्यमेव वेदस्येति प्रभाकर–मतम्।

—:o:—

## लोकवेदाधिकरणम्

(१-३-१०)

प्रयोगचोदनाभावात् अर्थैकत्वमविभागात् ।३०। अद्रव्य-शब्दत्वात् ।३१। अन्यदर्शनाच्च ।३२। आकृतिस्तु क्रियार्थत्वात् ।३३। न क्रिया स्यादिति चेत् अर्थान्तरे विधान न द्रव्यमिति चेत् ।३४। तदर्थत्वात्प्रयोगस्या-विभाग ।३५। इयन्ति सिद्धान्तसूत्राणि ।

वैदिकौ पदपदार्थौ लौकिकपदपदार्थाभ्यामन्यौ उत नेति संशयः । रूपभेदात् लौकिकवैदिकपदपदार्थौ भिन्नावेव । यथा – लौकिक आत्मा इत्यस्य शब्दस्य वेदे 'प्रयतं पुरुषात्मना' इति अकाररहितप्रयोगो दृश्यते । अपि च क्वचित् अर्थभेदोऽपि दृश्यते । मनुष्यगावस्तु अवाञ्चो वहन्ति । 'उत्तानपादा वै देवगवा भवन्ति' इत्येवमर्थभेदो दृश्यते । तस्माल्लोक-वेदयोः पदपदार्थावन्याविति पूर्वपक्षः ।

**सिद्धान्त.** :– वर्णा नित्या इति प्रथमाध्यायस्य प्रथमे पादे निरूपितम् । तस्माल्लोकवेदयोः वर्णानामेकत्वात्पदपदार्थावपि तावेव । यद्यपि प्रयोक्तृपुरुषभेदात् भेदो दृश्यते । तथापि 'त एवामी वर्णाः' इति प्रत्यभिज्ञावशाद्वर्णैकत्व तावदविवादम् । तद्वदेव 'यान्येव लोके गवादि-पदानि तान्येव वेदे अधीयमानानि[1]' इत्यबाधितप्रत्यभिज्ञावशात्तावेव

---

1. J. N. V P. 38

पदपदार्थाविति भाट्टमतम् । अक्षरलोपात्मकः पदभेदस्तु क्वाचित्क एव । तस्मात्प्रत्यभिज्ञाया लोपो नास्ति इति ।

अत्रैव वर्णकान्तरम् –

व्रीह्यादिशब्दाना व्यक्तिरर्थो जातिर्वेति सशयः । 'व्रीहीनवहन्ति' इत्यत्र जातौ अवहननासम्भवात् व्यक्तिरेवार्थः । ननु शुक्लव्यक्तौ व्युत्पन्नो गोशब्दः कृष्णव्यक्तौ प्रयुज्यमानः स्वार्थं त्यजेत् । तर्हि व्युत्पत्तिः कथमिति चेत् तर्हि व्युत्पत्तिकाले सा व्यक्तिः आकृत्या उपलक्ष्यते । तस्मात् व्यक्तिरेवार्थं इति पूर्वपक्ष ।

**सिद्धान्तः** :– अन्वयव्यतिरेकाभ्या आकृतावेव शक्तिग्रहणनिमित्तत्वात् आकृतिरेव शब्दार्थः, न तु व्यक्तिः । 'व्रीहीनवहन्ति' इत्यत्र तु अवहननकाले जात्या व्यक्तिरुपलक्षितो भवति । तस्मादाकृतिरेव शब्दार्थं इति भाट्टमते वर्णकान्तरम् ।

**प्रभाकरमतम्** – पूर्ववर्णकन्तु प्रभाकरमतेऽपि सममेव ।

वर्णकान्तरम् :– गोशब्दस्य जातिरर्थो व्यक्तिरर्थोवेति स एव संशयः । तत्र जातिर्वा व्यक्तिर्वा इत्यत्र निर्णायकाभावात् गवालम्भनचोदनायाः अप्रामाण्यमिति पूर्वपक्षः । आनन्त्यव्यभिचाराभ्यां व्यक्तिर्न बोध्यते । तस्मादाकृतिरेवार्थं इति प्रभाकरमतेन वर्णकान्तरम् ।

**मतभेद** :– प्रथमवर्णके मतभेदो नास्ति । अवहननं व्यक्तावेवेति शब्दाना व्यक्तिवाचित्वमेवेति भाट्टमते पूर्वपक्ष । अर्थनिर्णयाभावात् गवालम्भनचोदनायाः अप्रामाण्यमिति प्रभाकरमते पूर्वपक्षः । अन्वयव्यतिरेकाभ्या आकृतावेव शक्तिरिति भाट्टमतम् । आनन्त्यव्यभिचाराभ्या आकृतिवाचित्वसम्भवात् गवालम्भनचोदनायाः प्रामाण्यमेवेति प्रभाकरमतम् ॥

---

## प्रथमाध्यायस्य तृतीयपादाधिकरणेषु
## प्रतिपादिता विषया:

१. प्रथमाधिकरणे स्मृतीनां धर्मे प्रामाण्यनिरुपण भाट्टमते । प्रभाकरमते सर्वस्यापि वेदस्य प्रामाण्यनिरूपणम् ।

२. श्रुतिस्मृत्योर्विरोधे श्रुतिरेव प्रबलेति कुमारिलेन द्वितीयाधिकरणे प्रतिपादितम् । तत्रैव श्रुतिस्मृत्योः विरोधे स्मृतेर्भ्रान्तिमूलकत्व–कल्पनेति प्रभाकरेण प्रतिपादितम् ।

३. दृष्टमूलकस्मृतीनामप्रामाण्य तृतीयाधिकरणे प्रतिपादितम् ।

४. वेदवेदिकरणमध्ये आचमनादयः स्मार्तपदार्था अपि अनुष्ठेया एवेति चतुर्थाधिकरणे प्रतिपादितम् ।

५. यवादिशब्दाना दीर्घशूकाद्यर्थेष्वेव प्रयोग इति पञ्चमाधिकरणे प्रतिपादितम् । अपि च आर्यम्लेच्छयोः व्यवहारभेदे म्लेच्छव्यवहारस्य अप्रामाण्यम्, स्मृतिशिष्टाचारयोर्विरोधे शिष्टाचारस्याप्रामाण्यम्, लोकवाक्यशेषयोर्विरोधे लौकिकार्थस्याप्रामाण्यमिति च निरूपितम् ।

६. व्यवहारस्य क्लृप्तत्वात् पिकादिशब्दाना म्लेच्छप्रसिद्धार्थे एव प्रयोग इति षष्ठाधिकरणे निरूपितम् ।

७. कल्पसूत्राणा स्वतः प्रामाण्य नास्तीति सप्तमाधिकरणे निरूपितम् ।

८. होलाकोत्सवस्य सर्वसाधारण्येन प्रामाण्यमष्टमाधिकरणे निरूपितम् ।

९. व्याकरणस्य प्रामाण्य नवमाधिकरणे निरूपितम् ।

१०. व्रीह्यादिशब्दाना जातिवाचकत्वमेवेति दशमाधिकरणे प्रतिपादितम् ।

तृतीयः पादः समाप्तः

## अथ प्रथमाध्यायस्य चतुर्थ पाद

### उद्भिदादिपदाना यागनामतया-
### प्रामाण्याधिकरणम

(१-४-१)

उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ।१।
इदमेव सिद्धान्तपर सूत्रम ।

उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् – अपिवा नामधेय स्यात्यदुत्पन्नावपूर्वमविधायकत्वात् इत्यत सूत्रद्वयमाश्रित्य भाष्यकारेण पूर्वोत्तरौ पक्षौ व्याख्यातौ । तच्च न समीचीनम । तत्र प्रथमसूत्रे पूर्वपक्षस्थापकयुक्तेरदर्शनात् कथ भाष्यकारेण प्रथमसूत्रानुसारेण पूर्वपक्ष कृत । तस्मात्सूत्रद्वय अधिकरणद्वयेन कृत्वा द्वयोरप्यधिकरणयो भिन्न तपक्षसूत्रान्यमनादिति कुमारिल एकमधिकरणमेव पूर्वोत्तरपक्षाभ्यामुपस्तवान ।

अतश्च प्रथममद्भिदादिपदानि प्रमाणानि न वेति विचार क्रियते ।

---

1 मी सू 1-4-1 2

2 Ibid P P ..68-277

यतः यदि प्रमाणानि भवेयुः तदा केन रूपेण इत्याकांक्षा भवति । तस्मा-दुद्भिदादिपदानामपि गुणत्वेन उत नामधेयत्वेन वा प्रामाण्यमित्ययं विचारः प्रथममनुचित इति, प्रामाण्यमस्ति न वेति विचार· क्रियते ।

तत्र 'उद्भिदा यजेत' 'बलभिता यजेत' इत्यादिवाक्येषु उद्भि-दादिपदानां प्रामाण्यमस्ति न वेति सशयः । कुतः–'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिपरम्परायामेषां वाक्यानामपि पाठो दृश्यते । विध्यर्थ–वादमन्त्रभागेष्वपि अन्तर्भावो नास्ति । एवञ्च उद्भिदादीना प्रामाण्य–मेवेति पूर्वपक्षः ।

अध्ययनविध्यन्तर्भावस्य स्पष्टतया, विधावेव गुणत्वेन नामधेयत्वेन वा वक्ष्यमाणरीत्या अन्वयपूर्वकं प्रामाण्यमुच्यते । तस्मात् उद्भिदादि-पदानामपि प्रामाण्यमस्तीति भाट्टमतम् ।

प्रभाकरः : भाष्यानुसारमेव सूत्रद्वय एकाधिकरणत्वेन प्रत्य–पादयत् ।

---

## उद्भिदादिशब्दानां यागनामधेयताधिकरणम्

(१–४–२)

**अपिवा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ।२।**
**इदं सिद्धान्तपर सूत्रम् ।**

नामधेयत्वं च निमित्तचतुष्टयाद्भवति । मत्वर्थलक्षणाभयात्,

तत्प्रख्यशास्त्रात्, तद्व्यपदेशादिति । एभ्यश्चतुर्भ्यं नामधेयत्वाङ्गीकार. ।
तेन च उद्भिदादिपदाना प्रामाण्यं सिद्धयति ।

तत्र गुणे कर्मणि च तुल्यवद्वृत्तिकस्य उद्भिच्छब्दस्य मत्वर्थ-
लक्षणाभयात् नामधेयत्वमस्ति न वेति सशयः । 'उद्भिदा यजेत पशुकामः'
इत्यत्र तृतीयोपात्तेन उद्भिच्छब्देन योऽर्थो विवक्षित· सोऽय कश्चिद्गुणः
यागे विवक्षितो भवति । स च 'दध्ना जुहोति' इत्यनेन समानः । अथ
यद्येवमुच्येत दधिशब्दार्थः लोकप्रसिद्धः, उद्भिच्छब्दार्थस्त्वप्रसिद्धः इति
चेन्न । रूढ्याप्रसिद्धेरभावेऽपि 'उद्भिद्यते भूमिरनेन' इति व्युत्पत्त्या
खनित्रवाच्यत्वरूपोऽर्थः अस्त्येव । तर्हि अत्रापि 'ज्योतिष्ठोमेन यजेत'
इति विहितं प्रकृतं ज्योतिष्ठोममाश्रित्य खनित्ररूपो गुणो विधीयते ।
तस्मात् गुणविधिरिति पूर्वपक्षः ।

'पशुकामो यजेत' इत्यस्यायमर्थः । यागेन पशुरूपं फल भावये-
दिति । केनेत्यपेक्षायां 'उद्भिदा' इति तृतीयान्तं पदं यागनामत्वेन
अन्वेति । कथं गुणवाचकस्य उद्भिच्छब्दस्य नामत्वं इति चेदुच्यते ।
उद्भिच्छब्दश्च यया वृत्त्या गुणे प्रवर्तते, तयैव उद्भिद्यते उत्पाद्यते पशुफलम-
नेन यागेन इति व्युत्पत्त्या यागनामत्वेनान्वेति । न च विनिगमना-
विरहः । नामत्वपक्षे उद्भिन्नामकेन यागेनेति सामानाधिकरण्यमुपपद्यते ।
अन्यथा वैयधिकरण्यं प्रसज्येत । यदि 'खनित्रवता यागेन' इति
सामानाधिकरण्यमुच्येत, तदा मत्वर्थलक्षणा भवेत् । अतश्च उद्भिच्छ-
ब्दस्य लोकप्रसिद्धत्वाभावेऽपि उक्तरीत्या नामत्वमुपपद्यते । प्रयोजनं
सङ्कल्पादौ सर्वत्र नाम्नः उल्लेख एवेति भाट्टमतम् ।

**प्रभाकरमतम्** :— श्रुत्युक्तस्य आश्रयस्याभावात् 'उद्भिदा यजेत'
त्यत्र गुणविधिरेव । तस्मात् लौकिकमातृगणयागादिः आश्रयत्वेन
अपेक्षणीयः । तस्मिन् यागे गुणोऽयं विधीयते । एवञ्चास्याश्चोदनायाः

सापेक्षत्वादप्रामाण्यमिति पूर्वपक्षः । अत्रापि पूर्वोक्तावयवव्युत्पत्त्या यागनामसमर्पकत्वेन निरपेक्षप्रामाण्यसिद्धिः

मतभेदः :– गुणविधित्वेऽपि प्रामाण्यमेवेति भाट्टमते पूर्वपक्षः । गुणविधित्वे अस्याश्चोदनायास्सापेक्षत्वादप्रामाण्यमिति प्रभाकरमते पूवपक्षः । उभयमतेऽपि मत्वर्थलक्षणाभयात् अवयवव्युत्पत्त्या नामधेयत्वमेव उद्भिच्छब्दस्येति सिद्धान्तस्समान एव ।

—:o:—

## चित्रादिशब्दानां यागनामधेयताधिकरणम्

(१–४–३)

यस्मिन्गुणोपदेशः प्रधानतोऽभिसम्बन्धः ।३।
इद सिद्धान्तपरं सूत्रम् ।

चित्राशब्देन गुणो विधीयते उत यागनामधेयं वेति संशयः । 'चित्रया यजेत पशुकामः' इत्यत्र चित्राशब्द उद्भिच्छब्दवन्न यौगिकः । किन्तु रूढ्या प्रातिपदिकेन चित्रत्व, स्त्रीप्रत्ययेन च स्त्रीत्वं विधीयते । तस्मान्न नामता । अतः 'अग्नीषोमीय पशुमालभेत' इति विहित पशुयागमात्रं 'यजेत' इत्यनेन अनूद्य तस्मिन् पशौ चित्रत्वस्त्रीत्वगुणे विधीयेते । एवञ्चात्र गुणविधित्वेन प्रामाण्यमिति पूर्वपक्षः ।

सिद्धान्त :– चित्रत्वस्त्रीत्वयोर्विधाने वाक्यभेदः । तथा चोक्तं वार्तिककारेण[1] । यथा–

---

1. मी. द. P. 484 (2-2-3)

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ।। इति ।

अस्य अयमर्थ :– प्राप्त एकोद्देशेन अनेकगुणः अनेकविधेय एकेन विधिना विधातु न शक्यते । उद्देश्यस्य अप्राप्ते तु एकयत्नतः एकेन विधिना बहवोऽपि विधीयन्ते बहून्यपि अङ्गानि विधातु शक्यन्ते इति । तस्माद्वाक्य-भेदपरिहाराय चित्रत्वस्त्रीत्व गुणद्वयविशिष्ट पशुद्रव्यरूपं एक कारकं विधीयते । तदा विशिष्टविधौ गौरवो भवति । अतश्च 'अजोऽग्नीषोमीयः' इति प्राकरणिकवचनेन विहितपुस्त्वावरोधे स्त्रीत्वस्य विधातुमशक्यत्वात् न गुणविधानम् । तस्मात् चित्राशब्दस्य यजिसामानाधिकरण्येन वाक्य-भेदभयात् चित्राशब्दः कर्मनामधेयं भवति । चित्रत्वं तु विलक्षणद्रव्य–द्वारेणोपपद्यते । 'दधिमधु' इत्यादि यागस्योत्पत्तिवाक्यम् । उत्पन्नस्य-तस्य यागस्य 'चित्रया यजेत पशुकाम.' इत्यनेन अधिकारविधिना फलं विधीयते । एवञ्च चित्राशब्दस्य नामधेयत्वपुरस्सरं प्रामाण्यं सिद्धचति भाट्टमतेन ।

अत्र भाट्टप्रभाकरयोर्मतभेदो नास्ति । अतः प्रभाकरमत नोपन्यस्तम् ।।

—:o:—

## अग्निहोत्रादिशब्दानां–
## यागनामधेयताधिकरणम्

(१–४–४)

तत्प्रख्यं चान्यशास्त्रम् ।४। इद सिद्धान्तपर सूत्रम् ।

'अग्निहोत्र जुहोति[1]' इत्यत्र अग्निहोत्रशब्दः गुणः कर्मनाम वेति संशयः । नामधेयत्वे द्रव्यदेवतयोरभावात् यागस्वरूपमेव न सिद्धयति । तस्मादग्निदेवतारूपो गुणः अनेन दर्विहोमे विधीयते । तस्मादग्निहोत्र-शब्दो गुणविधायक इति पूर्वपक्षः ।

**सिद्धान्तः** :– यतः यागस्वरूपाभावात् न नामत्वमिति पूर्वपक्षे यदुक्तम्, तन्न सम्भवति । अग्निर्ज्योतिः ज्योतिरग्निस्वाहेति सायं जुहोति; सूर्यो ज्योतिस्सूर्यः स्वाहेति प्रातः[2]' इत्यनेन मन्त्रवर्णेन प्राप्तत्वाद्देवता न विधेया । अतः अग्निसूर्यदेवताकस्य सायप्रातःकालयोर्नियमेन अनुष्ठेयस्य कर्मणः' 'अग्निहोत्रम्' इति नामधेयम् । एवञ्च अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामत्वपूर्वकं प्रामाण्यम् । तस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वेन अग्निहोत्रशब्दः कर्मनामधेयमिति भाट्टमतम् ।

**प्रभाकरमतम्** :– 'अग्निहोत्र जुहोति' इत्यत्र मत्वर्थलक्षणाभावात् गुणविधिरिति पूवपक्षः । 'यदग्नये च प्रजापतये च साय जुहोति' इत्यनेन अग्नेः प्राप्तत्वात् गुणविधित्वं नास्ति । तस्मात्तत्प्रख्यशास्त्रा– न्नामत्वमिति प्रभाकरमतम् ।

**मतभेद**. :– अग्निहोत्रशब्देन गुणो विधीयत इति उभयमत– पूर्वपक्षः । नामधेयत्वमिति सिद्धान्तश्च । तत्र मन्त्रवर्णात् देवताप्राप्तिः भाट्टमते । 'यदग्नये च' इत्यादिना देवताप्राप्तिः प्रभाकरमते इति ।

—:o.—

---

1. J. N. V. P. 45 (1-4-4)
2. Ibid ,, ,,

## श्येनादिशब्दानां यागनामधेयताधिकरणम्

(१-४-५)

तद्व्यपदेशं च ।५। इदं सिद्धान्तपरं सूत्रम् ।

'श्येनेनाभिचरन् यजेत'[1] इत्यत्र श्येनशब्दः गुणः नामधेयं वेति संशयः । नामत्वपक्षे द्रव्यदेवतयोरभावात् यागस्वरूपं न सिद्धयति । ततः सोमयागे नित्यं सोम बाधित्वा तत्स्थाने पक्षिद्रव्यरूपो गुणः विधीयते । तेन च श्येनशब्दस्य पक्षिणि लोकसिद्धा रूढिरनुगृह्यते । उभयगुणाभावान्नात्र वाक्यभेदः । एवञ्चानेन वाक्येन श्येनद्रव्यरूपो गुणः सोमयागे विधीण्ते इति पूर्वपक्षः ।

**सिद्धान्तः** :– यथा वै श्येनो निपत्त्यादत्ते, एवमयं द्विषन्त भ्रातृव्यं निपत्यादत्ते, यमभिचरति श्येनेन 'इत्यर्थ वादानुरोधेन स्वस्य स्वोपमानत्वानुपपत्तेः श्येनशब्दस्य नामत्वम् । एवञ्च पक्षिण उपमानस्य गुण उपमेये कर्मण्यस्ति इति श्येनशब्दस्य अव्यभिचारकर्मत्वम् । एवञ्च श्येनशब्दस्यकर्मनामत्वेन प्रामाण्य भाट्टमतेन ।

**प्रभाकरमतम्** :– श्येनवाक्ये श्येनशब्दः पक्षिविशेषरूपगुणपरोऽस्तु । गुणपरत्वे श्रौतार्थस्य कर्मणा अन्वयात् । गौणपक्षेतु श्रौतार्थान्वय एव नास्ति । तस्माद्गुणविधिरेवात्रेति पूर्वपक्ष । वाक्यस्य कार्य भावार्थी-

---

1. J. N. V. P 46

वगतिरेव । विशिष्टविध्याश्रयणे अनेकार्थत्वप्रसङ्गात् एकार्थता आश्रयणीया । सामानाधिकरण्यं च लाक्षणिकेष्विव गौणेष्वपि अबाधितं भवति । वत्यर्थस्य विधेयत्वात् । तेन मतुब्लोपे अनेकार्थविधानात् एकार्थावगम विरोधात् वरं वतेर्लोप । अतश्च नामधेयत्वमिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– वाक्यभेदाभावात् सोमयागे सोमद्रव्यं बाधित्वा अनेन गुणो विधीयते इति भाट्टमतेन पूर्वपक्षः । श्रौतार्थानुग्रहाय श्येनशब्दः गुणपर इति प्रभाकरमतेन पूर्वपक्षः । स्वस्य स्वोपमानत्वकथनं नामत्वे एवोपपद्यते । अतश्च कर्मनामत्वेन प्रामाण्यमिति भाट्टमतम् । वैयधिकरण्यपरिहाराय वतेर्लोपः । तेन नामधेयत्वमिति प्रभाकरमतम् । एवञ्च उभयोर्मतयोः श्येनशब्दस्य नामधेयत्वमेवेति सिद्धान्तः किन्तु । युक्तिभेद एव ।

तदेवं मत्वर्थलक्षणादिप्रकारचतुष्टयवशादुद्भिदादीना विधेयार्थपरिच्छेदकविधया नामधेयत्वेन प्रामाण्यमिति ।

—:o:—

## वाजपेयादिशब्दानां नामधेयताधिकरणम्

(१–४–६)

नामधेये गुणश्रुते स्याद्विधानमिति चेत् ।६।

इद पूर्वपक्षपरं सूत्रम् ।

तुल्यत्वात्क्रिययोर्न ।७। ऐकशब्दे परार्थवत् ।८।

इदं सिद्धान्तपरं सूत्रम् ।

वाजपेयशब्दः गुणो नाम वेति संशयः । तत्र 'वाजपेयेन स्वाराज्यकामो यजेत[1]' इत्यत्र वाजशब्दस्य अन्नमर्थः । तच्च अन्न पेयं सुराद्रव्यम् । सुराग्रहाणामनुष्ठेयत्वात् वाजपेयशब्देन गुणो विधीयते, सकृदुच्चारिताख्यातस्य सकृत् वाजपेयशब्देन, सकृत् फलेन च अन्वयात् मत्वर्थलक्षणा न भवति । यजेत इत्यत्र प्रकृत्या याग उच्यते, प्रत्ययेन च भावना उच्यते । अतः उभयसम्बन्धे दोषो न भवति । एवञ्च तन्त्रेण सम्बन्धाङ्गीकारे गुणविधित्वेन मत्वर्थलक्षणा न भवति । अतोऽत्र गुण-विधिरेवेति पूर्वपक्षः ।

विरूद्धत्रिकद्वयापत्तेः यजतेः तन्त्रसम्बन्धो न भवति । वाक्य–भेदभयाच्च न पृथक् सम्बन्धः । 'द्रव्येण याग कुर्यात्' यागेन फलं भावयेत् इति । अतः अग्निहोत्रशब्दवत्कर्मनामधेयत्वमिति भाट्टमतम् ।

**प्रभाकरमतम्** :– कि याजिः फलगुणौ प्रतिपादयति, उत कर्म वेति सशयः । तत्र याजि. फलगुणौ प्रति स्वार्थं तन्त्रेण समर्पयति । अतश्च सकृदुच्चारणे उद्देश्यविधेयत्वयोरनवगमात् नात्र आश्रयान्तरापेक्षा । अतश्च न कर्मतेति पूर्वपक्षः । परस्परासम्बद्धयोः द्वयोर्विधाने वाक्यभेदो भवति । अतश्च यजतिः तन्त्रेण फलगुणौ प्रति न स्वार्थं विधातुं शक्नोति । अतश्च मत्वर्थलक्षणा च न भवति । तथा च कर्मनामधेय-मिति प्रभाकरमतम् ।

**मतभेदः** :– वाजपेयशब्देन गुण एव विधीयते इति पूर्वपक्षे कर्मना-मतैवेति सिद्धान्तः भाट्टमते । वाजपेयोदाहरणन्तु उपलक्षणमेव । किन्तु सर्वनामाक्षेपकमिदमधिकरण प्रभाकरमते । अतः शब्दस्य कर्मनामता

---

1. J. N. V. P. 47

नास्तीति पूर्वपक्षे, फलगुणयोः परस्परसम्बन्धानवगमात् नामतैवेति प्रभाकरमतम् ।

—:o:—

## आग्नेयादीनामनामताधिकरणम्

(१–४–७)

तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः स्युः ।९। इद सिद्धान्तपरं सूत्रम् ।

'यदाग्नोयोऽष्टाकपालोऽमावास्यायां, पौर्णमास्यां चाच्युतो भवति'[1] इत्यत्र आग्नेयशब्दः नाम उत गुणो वेति सशयः । तत्र अग्निहोत्रशब्दवदेव आग्नेयशब्दोऽपि कर्मनामैवेति पूर्वपक्षः। अग्निहोत्रस्थले देवताप्रापकं मन्त्रलिङ्गमस्ति । अत्र तु कर्मनामत्वे देवताराहित्यप्रसङ्गो भवति । अतश्च अग्निर्देवता अस्येति व्युत्पत्त्या आग्नेयशब्देन अग्निदेवतारूपगुणो विधीयते । तस्मादाग्नेयशब्द' गुण एवेति भाट्टमतम् ।

**प्रभाकरमतम् .–** तत्रैव आग्नेयशब्दस्य नामत्वे देवताराहित्यं भवति । अतश्च उभयगुणविधाने वाक्यभेदप्रसङ्गात् विधिर्न सम्भवति । अतश्चाप्रामाण्यमिति पूर्वपक्षः । अग्निदेवता अष्टाकपालद्रव्यरूपगुणद्वयविशिष्टकर्मविधाने वाक्यभेदाभावात् प्रामाण्यमेवेति प्रभाकरमतम् ।

**मतभेदः :–** आग्नेयशब्दस्यापि अग्निहोत्रशब्दवदेव कर्मनामता इति भाट्टमते पूर्वपक्षः । नामत्वपक्षे उभयगुणविधाने वाक्यभेदात् सर्वस्य

1. J. N. V P. 49

वाक्यस्य च अप्रामाण्यमिति प्रभाकरमते पूर्वपक्षः। आग्नेय इत्यत्र एव विधीयते। तस्माद्गुणसमर्पक एवेति भाट्टमतसिद्धान्तः। विशिष्ट विधौ विधिसम्भवात् प्रामाण्यमेव तस्य वाक्यस्येति प्रभाकरमतम्।

——

## बर्हिरादिशब्दानां जातिवाचिताधिकरणम्

(१–४–८)

बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः।१०।
इदं पूर्वपक्षपर सूत्रम्।

बर्हिराज्यपुरोडाशादिशब्दानां सस्कारवाचित्वमुत जातिवाचित्वं वेति संशयः। 'बर्हिर्लुनाति' इत्यादिशास्त्रे बर्हिरादिशब्दाना सस्कृतेषु तृणादिष्वेव प्रयोगदर्शनात् यूपाध्वनीयादिवदेव सस्कारवाचित्वमिति पूर्वपक्षः।

सिद्धान्त :– जाति विहाय लोके कैरप्यप्रयुज्यमानत्वात् अन्वय-व्यतिरेकाभ्यां च बर्हिरादिशब्दाना जातिवाचित्वमेव। अपि च 'बर्हि-रादाय गावो गता' इत्यादि लौकिकप्रयोगे च बर्हिश्शब्दस्य जातिवाचितैव दृश्यते। तस्मात् जातिवाचित्वमेव। प्रयोजनन्तु 'बर्हिषा यूपावटमव-स्तृणाति' इत्यत्रैव संस्कारेण विना स्मरणसिद्धिरिति भाट्टमतम्।

**प्रभाकरमतम्** :– बर्हिरादिशब्दानां निमित्तस्य दुर्वचत्वात् चोदनाया अप्रामाण्यमिति पूर्वपक्षे, बर्हिरादिशब्देषु जातेरेव निमित्तत्वा-त्तस्याः चोदनायाः प्रामाण्यमेवेति प्रभाकरमतम्।

**मतभेदः :-** बर्हिरादिशब्दाना शास्त्रप्रयोगानुसारेण संस्कारवाचित्वमिति भाट्टमते पूर्वपक्षः । निमित्तस्य दुर्वचत्वादस्याः चोदनायाः अप्रामाण्यमिति प्रभाकरमते पूर्वपक्षः । अन्वयव्यतिरेकवशात् लौकिकव्यवहाराच्च जातिवाचित्वमेवेति भाट्टमतसिद्धान्तः । जातेरेव निमित्तत्वात् अस्या चोदनाया प्रामाण्यमेवेति प्रभाकरमतम् ।

---

## प्रोक्षण्यादिशब्दानां यौगिकताधिकरणम्

(१-४-९)

प्रोक्षणीष्वर्थसंयोगात् ।११। इदं पूर्वपक्षपरं सूत्रम् ।

प्रोक्षणीरासादय इत्यत्र प्रोक्षणशब्दस्य प्रवृत्तिनिमित्तं, किं सस्कृतिः, जातिः, योगो वेति सशयः । तत्र वैदिकप्रयोगेषु संस्कृतानामेव अपां प्रोक्षणीशब्दवाच्यत्वात् संस्कृतिरेव प्रवृत्तिनिमित्तमिति प्रथमः पक्षः ।' प्रोक्षणीभिरुद्वेजितास्म ' इत्यत्र संस्कार विहायापि प्रयोगात् जातिरेव प्रवृत्तिनिमित्तमिति द्वितीयपक्षः । तन्न । यतः अन्योन्याश्रयदोषदर्शनान्न संस्कारवाचित्वमिति प्रथमपक्षनिरासः । प्रोक्षणीशब्द पूर्व उदकजातौ वृद्धव्यवहारे अक्लुप्तः, अतश्च अधुना शक्तिः कल्प्यो भवतीति न द्वितीयः पक्ष । अतः योग एवात्र प्रवृत्तिनिमित्तम् । योगस्तु व्याकरणक्लुप्तः । उपसर्गपूर्वाद्धातोः करणार्थे ल्युट्प्रत्यये विहिते प्रोक्षणीशब्दनिष्पत्तिः इति भाट्टमते सिद्धान्तः ।

**प्रभाकरमतम् :-** सामान्याकारेण प्रोक्षणीशब्दः सर्वदेशेषु सस्कृते एव प्रयुक्तः । क्वचिच्चासंस्कृतेऽपि । तस्मादर्थनिर्णयाभावादप्रामाण्यमिति पूर्वपक्षः । प्रोक्षणीशब्दयोगार्थस्तु संस्कृतेऽसंस्कृते च

सम्भवति । अतश्च योगार्थविरोधो नास्ति । तस्मात्प्रामाण्यमेवेति प्रभाकरमतम् ।

**मतभेदः** :– योगार्थ एव प्रवृत्तिनिमित्तमिति सिद्धान्तपक्षः समान एव । सस्कारः प्रवृत्तिनिमित्तं न भवति । जातिरेवेति प्रभाकरमते पूर्वपक्षः । अर्थनिर्णयाभावात् अस्याः चोदनायाः अप्रामाण्यमिति प्रभा–करमते पूर्वपक्षः । इति ।

—:o:—

## निर्मन्थ्यशब्दस्य यौगिकताधिकरणम्

(१–४–१०)

तथा निर्मन्थ्ये ।१२। सिद्धान्तपरमिदं सूत्रम् ।

अग्निचयने एवं श्रूयते 'निर्मन्थ्यकेनेष्टकाः पचन्ति' इति । निर्मन्थ्यशब्दः रूढिः, योगः, योगरूढिर्वेति संशयः । तत्र बर्हिरादिवत् रूढिरित्येकः पक्षः । प्रोक्षणीशब्दवद्योगार्थ एवेति द्वितीयः पक्षः । किन्तु पङ्कजादिवत् योगरूढमेव । तथा च लौकिकनिर्मथनेन च जन्यस्य वह्नेर्निवृत्तौ, अचिरनिर्मथिते एवेष्टकापाकः कर्तव्य इति अर्थो भवति । तस्मान्निर्मन्थ्यशब्दः योगरूढिरेवेति भाट्टमतम् ।

प्रभाकरमतम् :– निर्मन्थ्यशब्दः यदि यौगिकः तदा चिरनिर्मथिते प्रयोगः स्यात् । यदि न यौगिकः तदा अचिरनिर्मथिते प्रयोगो भवति । तस्मादर्थनिर्णयाभावात् अस्याः चोदनायाः अप्रामाण्यमिति पूर्वपक्षः । व्याकरणस्मृत्या निर्मन्थ्यशब्दः अविशेषेण उभयत्रापि प्रवर्तते । प्रयोगस्तु

व्याकरणस्मृत्या विशेषे एव प्रवृत्तत्वात्, अर्थसत्त्वादस्याश्चोदनायाः प्रामाण्यमेवेति प्रभाकरमतम् ।

मतभेदः :– निर्मन्थ्यशब्दः योगरूढिरिति भाट्टमतम् । यौगिक एव निर्मन्थ्यशब्द इति प्रभाकरमतम् । इति ।

---

## विश्वेदेवादिशब्दानां यागनामधेयताधिकरणम्

(१–४–११)

वैश्वेदेत्रे विकल्प इति चेत् ।१३। इदं पूर्वपक्षपरं सूत्रम् । न वा प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्याय ।१४। मिथश्चानर्थसम्बन्धः ।१५। परार्थत्वाद्गुणानाम् ।१६। इयन्ति सिद्धान्तसूत्राणि ।

चातुर्मास्ये वैश्वदेवनामके प्रथमे पर्वणि आग्नेयादयः अष्टौ यागा विहिता.। तेषां सन्निधौ 'वैश्वदेवेन यजेत'[1] इति श्रुतम् । तत्र यजेत इत्यनेन सप्त यागाननूद्य तदुद्दिश्य वैश्वदेवशब्देन देवतारूपो गुणो विधीयते । 'वैश्वदेव्यामिक्षा' इत्यत्र तु विश्वेदेवदेवतायास्सत्वान्न तत्र विधीयते । तस्माद्गुणविधिरिति पूर्वपक्षः ।

**सिद्धान्तः** :– उत्पत्तिवाक्यविहितानष्टौ यागान् 'यजेत' इत्यनेन अनूद्य तत्सघस्य वैश्वदेवशब्दनामधेयम् । न च विधित्वासम्भवान्नाम्नो

---

1. J. N. V. P. 52

वैयर्थ्यमिति वाच्यम् । अतः 'प्राचीनप्रवणे वैश्वदेवेन यजेत[1]' इत्यत्र वैश्वदेवशब्देन अष्टयागसंघस्य व्यवहारः क्रियते । तस्माद्विधेस्सम्भवान्न नाम्नो वैयर्थ्यम् । अतः वैश्वदेवशब्दस्य नामधेयत्वेन प्रामाण्यमिति भाट्टमतम् ।

**प्रभाकरमतम्** :— तत्रैव अष्टसु यागेषु उत्पत्तिशिष्टदेवतावरोधात् न गुणविधित्वम् । वैश्वदेव्यामिक्षायाश्च नामधेयतया तत्रैवास्य अन्वयात् न कर्मान्तरम् । गुणविधित्वेनापि सामानाधिकरण्यसम्भवात् न नामत्वेनान्वयो भवति । तस्मात् सापेक्षत्वादस्याश्चोदनाया अप्रामाण्यमिति पूर्वपक्षः । गुणविधित्वपक्षे विश्वेदेवयागे अविधानं स्यात् । तस्मादष्टानामपि यागानां वैश्वदेवशब्दः नामधेयम् । तस्मान्निरपेक्षत्वादस्याश्चोदनायाः प्रामाण्यमेवेति प्रभाकरमतम् ।

**मतभेद** :— वैश्वदेवशब्दस्य कर्मनामत्वे रूपाभावात् विधेः वैयर्थ्यमिति गुणविधित्वमेवेति भाट्टमते पूर्वपक्षः । सापेक्षत्वादस्या विधेरप्रामाण्यमिति प्रभाकरमते पूर्वपक्ष । वैश्वदेवशब्दः नामधेयमेवेति मतद्वयेऽपि सिद्धान्तस्सम एव ।

——

## वैश्वानरेऽष्टत्वाद्यर्थवादताधिकरणम्

(१–४–१२)

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नये ।१७।

इदं पूर्वपक्षपर सूत्रम् ।

1. J. N. V. P. 52

गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्ति ।१८। तच्छेषो नोपपद्यते ।१९। अविभागाद्विधानार्थे स्त्युत्यर्थे नोपपद्येरन् ।२०। करणं स्यादिति चेत् ।२१। आनर्थक्यादकारण,–कर्तुर्हि कारणानि· गुणार्थो विधीयते ।२२। इयन्ति सिद्धान्त-पराणि सूत्राणि ।

काम्येष्टिकाण्डे श्रूयते 'वैश्वानर द्वादशकपाल निर्वपेत् पुत्रे जाते' यदष्टाकपालो भवति गायत्र्यैवेन ब्रह्मवर्चसेन पुनाति, यन्नवकपाल–स्त्रिवृतैवास्मिस्तेजो दधाति । यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालःस्त्रिष्टुभैवास्मिन्निन्द्रिय दधाति, यद्द्वादशकपालो जग-त्यैवास्मिन्पशून् दधाति, यस्मिञ्जात एतामिष्टि निर्वपति पूत एव स तेजस्वी अन्नाद इन्द्रियावीपशुमान् भवति[1],' इत्यत्र अष्टाकपालादिगुणो नाम उत स्तुतिर्वेति सशयः । तत्र द्वादशकपालशब्दस्य सख्यापरत्वे द्वादश-संख्याया अष्टत्वादीनामन्तर्भावात् अष्टाकपालदिशब्दाः कर्मनामधेयानी-त्येकः पक्षः । पुरोडाशद्रव्यपरत्वे द्वादशसु कपालेषु संस्कृतः पुरोडाशः, इत्यर्थो भवति । तदा पुरोडाशगुणः ब्रह्मवर्चसादिफलोद्देशेन विधीयते इत्यपरः पक्ष. ।

बहूना गुणानां विधाने वाक्यभेद, तस्मात् 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति विहितस्य 'यस्मिञ्जातमेतम्' इत्युपसहारेण एकवाक्यता–वगमात्, अष्टाकपालादिभिः द्वादशकपाल· स्तूयते । तस्मादर्थवादत्वेन प्रामाण्यमिति भाट्टमतम् ।

---

1. J. N. V. P. 53

प्रभाकरमतम् :– अष्टाकपालादीनां स्मारकत्वाभावात् न मन्त्रत्वम् । भावार्थसामानाधिकरण्याभावाच्च न नामत्वम् । उत्पत्तिशिष्टगुणावरोधान्न गुणविधित्वम् । संख्यान्तरेण संख्यान्तरस्तुतिर्न भवतीति नार्थवादत्वम् । तस्मात् अनपेक्षत्वाभावादप्राण्यमिति पूर्वपक्षः । द्वादशसंख्याया अष्टत्वादेरन्तर्भावात् सर्वस्यापि वाक्यस्य द्वादशकपाल स्तुतिपरत्वेन अन्वयो भवति । तथा च एकदेशस्तुत्या समुदायस्तुतिरिति अनपेक्षत्वात्प्रामाण्यमिति प्रभाकरमतम् ।

**मतभेद** :– नामता गुणता चेति उभयगुणविधाने वाक्यभेदो भवति । अतश्च स्तुत्या अर्थवादत्वमेवेति भाट्टमतम् । प्रभाकरमते अष्टाकपालादिशब्दाना अर्थवादतयैवान्वयात् प्रामाण्यमेवेति मतद्वयमपि समानमेव । इति ।

—:o:—

## यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थ–त्वाधिकरणम्

(१–४–१३)

तत्सिद्धिः ।२३। इद सिद्धान्तपरं सूत्रम् ।

'यजमानः प्रस्तरः'[1] इत्यत्र सामानाधिकरण्यात् एकमितरस्य नामधेयम् इत्येकः पक्षः । अथवा गुणविधिरित्यपरः पक्षः । तथा च अचेतनस्य प्रस्तरस्य यजमानकार्ये अशक्तत्वात् प्रस्तरकार्ये यजमानरूपगुणो

---

1. J. N. V. P 54

विधीयते इति पूर्वपक्षः । सिद्धान्तः – प्रस्तरयजमानयोरत्यन्तभेदसत्त्वात् न नामत्वं भवति । गुणविधिपक्षे प्रस्तरकार्यं अग्नौ प्रहरणमेव । यदि यजमानस्य प्रहरणं स्यात्तदा कर्मलोपो भवेदिति न गुणविधिः । एवञ्च विधेयः प्रस्तरशब्दः यजमानशब्देन स्तूयते । यथा यजमानः स्वकार्यकर्ता, तथैव प्रस्तरकार्यकर्ता च इति भाट्टमतम्

**प्रभाकरमतम्** :– यत्र सम्बन्धिता नावगम्यते गुणविधानं च न सम्भवति, तत्र 'यजमानः प्रस्तरः' इत्यादौ अप्रामाण्यमेवेति पूवपक्षः । यद्यपि गुणविधिर्न भवति, तथापि अर्थवादता अस्त्येव । तस्मात्प्रामाण्यमेवेति प्रभाकरमतम् ।

**मतभेदः** :– उभयमतेऽपि सिद्धान्तपक्षः समान एव । यजमानशब्दः नाम गुणो वेति भाट्टमते पूर्वपक्षः । गुणविधेरप्यसम्भवात् अप्रामाण्यमिति प्रभाकरमतम् ।

तत्सिद्धिर्नाम तत्कार्यकारित्वमर्थः । अतश्च तत्सिद्धेः गौणीनिमित्तत्वात् 'यजमानः प्रस्तरः' इत्यत्र गुणविधिरिति प्रतिपादितम् ॥

—:o:—

## आग्नेयादिशब्दानां ब्राह्मणादि स्तुत्यर्थताधिकरणम्

(१–४–१४)

जातिः ।२४। इदं सिद्धान्तसूत्रम् ।

'आग्नेयो ब्राह्मणः[1]' इयत्र अग्निशब्दः नाम गुणो वा उत स्तुतिर्वेति संशयः। तत्र अग्निब्राह्मणयोरत्यन्तप्रसिद्धार्थकत्वात् आग्नेयशब्दः न नामधेयम्। तद्धितस्तु सूक्ते हविषि वा प्रयुक्तः। अतश्च गुणविधिः। अतश्च 'प्रजापतिरकामयत[2]' इत्यादिमन्त्रेण अग्निब्राह्मणयोरेकमुखप्रभवत्वस्य ज्ञायमानाद्धेतो आग्नेयशब्दः नामधेयमिति भाट्टमतेन सिद्धान्तः।

गौणीनिमित्तप्रकारेषु जात्यादिष्वपि एवमेव अर्थवादत्वेन प्रामाण्यमस्त्येवेति प्रभाकरः सामान्याकारेण प्रत्यपादयत्। अतश्च जाति, सारूप्य, प्रशंसा, भूमा, लिङ्गसमवायेषु गौणीनिमित्तप्रकारेषु विचारविषयविशेषाभावान्नोपन्यस्तं प्रभाकरमतमिति। अतश्च पृथगधिकरणानि तावत्परिहार्याण्यप्रदर्शनार्थानि[3]' इत्युक्तवान् प्रभाकरः। अतः अर्थवादतयैव प्रामाण्यमिति प्रभाकरमतम्।

— -

## यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम्

(१-४-१५)

सारूप्यात् ।२५। इदं सिद्धान्तपरं सूत्रम्।

'आदित्यो यूपः[4]' इत्यत्र आदित्यशब्दः यूपस्तावकः। तत्र निमित्तं तु सारूप्यमेव। आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद्यूपेऽप्यस्ति इति भाट्टमतम्।

——

1. J. N V. P. 55
2. Ibid. P. 55
3. बृहती P. 262
4. J N. V. P. 26

## अपश्वादिशब्दानां गवादिप्रशंसार्थत्वाधिकरणम्

(१-४-१६)

प्रशंसा ।२६। इदं सिद्धान्तपरं सूत्रम् ।

अपशवो वा अन्ये गो अश्वेभ्यः, पशवो गो, अश्वाः[1] इत्यत्र अपशु-शब्दस्य पशुत्वनिषेधमात्रेण सम्भवात् न स्तुतिवाचकः । तस्माद्गुण एव विधीयत इति पूर्वपक्षः ।

**सिद्धान्त** :– पूर्वाधिकरणवदेवात्र 'प्रशसा' गोणीप्रवृत्तिनिमत्तम् । अपशुशब्देन यद्यपि घटादयो गृहीतु शक्यन्ते । तथापि 'गो अश्वेभ्यः' इत्युक्तत्वादजादय एव अपशवः । अजादयः स्वतः पशवोऽपि गवाश्वौ प्रति अपशवस्सम्पन्नाः, गवाश्वयोः स्तुतिरेवेति अर्थवादत्वे प्रामाण्यमिति भाट्टमतम् ।

---

## बाहुल्येन सृष्टिव्यपदेशाधिकरणम्

(१-४-१७)

भूमा ।२७। इदं सिद्धान्तपरं सूत्रम ।

1. J. N. V. P. 56

'सृष्टीरुपदधाति'[1] इत्यत्र वाक्यान्तरेण एकवाक्यताया अभावान्नार्थ-वादत्वम् । अपि तु गुणविधिरेवात्र । सृष्टिपदघटितमन्त्रोपधेयेष्टकाः सृष्टिपदस्यार्थः । 'ब्रह्मासृज्यत' 'भूतान्यसृज्यन्त' इत्यादयः सृष्टिमन्त्राः । ते च मन्त्राः उपधाने गुणत्वेन विधीयन्ते । तस्माद्गुणविधिरिति पूर्वपक्षः ।

'सृष्टीरुपदधाति' इत्यत्र सृष्टिशब्देन मन्त्राननूद्य इष्टकोपधानं विधीयते । सृष्टिशब्दानुवादस्तु 'यथासृष्टमेवावरुन्ध' इत्यर्थवादोपपत्त्यर्थः । अतश्च भूमा नाम बाहुल्यमर्थः । तच्च अत्र प्रवृत्तिनिमित्तम् । तस्मात् सृष्टिपदेन सृष्टचसृष्टिपदघटितमन्त्रोपधेयेष्टका इत्यर्थो भवतीति भाट्ट-मतम् ।

—:o:—

## प्राणभृदादिशब्दानां स्तुत्यर्थत्वाधिकरणम्

(१-४-१८)

लिङ्गसमवायात् ।२८। इदं सिद्धान्तपर सूत्रम् ।

'प्राणभृत उपदधाति' इत्यत्र सृष्टिन्यायेन मन्त्रे विधिरिति । पूर्वपक्षः । 'एतस्यैव प्राणान् ददाति' इत्यस्य अर्थवादस्य उपपत्त्यर्थः अर्थवादः । पूर्वाधिकरणे भूमा प्रवृत्तिनिमित्तम् । अत्र तु लिङ्गसमवायः प्रवृत्तिनिमितम् । लिङ्गसमवायो नाम अल्पत्वम् । शेषं सर्वं पूर्वसमर्मिति भाट्टमतम् ।

—:o:—

---

1. J. N. V. P 57

## वाक्यशेषेण सन्दिग्धार्थनिरूपणाधिकरणम्

(१–४–१९)

सन्दिग्धेषु वाक्यशेषात् ।२९। इद सिद्धान्तपरं सूत्रम् ।

'अक्ताः शर्करा उपदधाति' इत्यस्य विधेः 'तेजो वै घृतम्'[1] इत्यर्थवादः श्रूयते । तत्र शर्करशब्देन क्षुद्रपाषाणा उच्यन्ते । ताश्च आद्राः कर्तव्याः । केनेत्याकांक्षायां घृततैलवसादन्यतमेन इति । अतः असञ्जातविरोधित्वात् विधेर्मुख्यत्वाच्च । सामान्यविधेर्ग्रहण क्रियते, न तु अर्थवादप्राप्तघृतेन । एवञ्च येन केनापि अञ्जनं कार्यमिति पूर्वपक्षः ।

**सिद्धान्तः** :– सामान्यस्य अननुष्ठेयत्वात् विधिवाक्य न सामान्यं विधत्ते । विशिष्टसाधनबोधकवाक्याभावात् वाक्यशेषादेव घृतेन अञ्जनमिति निर्णयः भाट्टमतेन ।

**प्रभाकरमतम्** :–यववराहाधिकरणे यवादिपदानां वाक्यशेषादेवार्थनिर्णयः कृतः । अतश्चात्र वाक्यवाक्यार्थयोः संशयनिर्णयः क्रियते । 'अक्ताः शर्करा उपदधाति' इत्यादौ उपक्रमोपसंहारयोर्विरोधात् वाक्यार्थसन्देहो भवति । तस्मात् अप्रामाण्यमस्येति पूर्वपक्षः । उपक्रमे सामा-

---

1. J. N. V. P. 59

न्याञ्जनविधानात् उपसंहारस्थ घृतपदं घृताघृतसाधारणमञ्जन-साधनद्रव्यलक्षणमिति सिद्धान्ते एकदेशः । सामान्याञ्जनसाधनत्वस्य अविधानात् एकवाक्यत्वाच्च घृतेनैवाञ्जन कर्तव्यमिति भाट्टमतम् ।

**मतभेदः** :– येन केनापि द्रव्येण अञ्जन कर्तव्यमिति भाट्टमत-पूर्वपक्षः । उपक्रमोपसंहारयोर्विरोधात् अस्य वाक्यस्य अप्रामाण्यमिति प्रभाकरमतेन पूर्वपक्षः । सामान्यप्राप्तेरविधानात् वाक्यशेषादेवार्थनिर्णय इति उभयमतेन सिद्धान्तः ।

---

## सामर्थ्येन अव्यवस्थितानां व्यवस्थाधिकरणम्

(१–४–२०)

अर्थाद्वा कल्पनैकदेशत्वात् ।३०। इदं सिद्धान्तसूत्रम् ।

'स्रुवेणावद्यति' 'स्वधितिनावद्यति' 'हस्तेनावद्यति'[1] इति श्रूयते । अवदेयद्रव्यकत्वं च आज्यमांसपुरोडाशेषु अस्ति । अतः व्यवस्थाभावात्सर्वे सर्वत्र सङ्कीर्णा एवेति पूर्वपक्षः । सामर्थ्यस्यैवात्र व्यवस्थापकत्वात्, स्रुवादीनां व्यवस्थयैव प्राप्ति । आज्यस्य स्रुवो योग्यः, मांसस्य स्वधितिः, पुरोडाशस्य हस्तः । एवञ्च सामर्थ्यस्यापि अर्थकल्पकत्वमस्तीति भाट्टमतम् ।

**प्रभाकरमतम्** :– शास्त्राणि नियोगः नियोगार्थः अनुष्ठानम् ।

---

1 J. N. V. P. 60

अतश्च अनुष्ठाने सन्देहे शास्त्रस्यापि सन्दिग्धार्थकत्वात् अस्य वाक्यस्य अप्रामाण्यमिति पूर्वपक्षः। नियोगार्थः अनुष्ठानं न भवति। किन्तु सामर्थ्यान्निर्णेतव्यः नियोगार्थः। अतश्च अनुष्ठानस्य सामर्थ्यसाध्यत्वात् सामर्थ्यादेव अर्थनिर्णय इति प्रभाकरमतम्।

**मतभेदः** :– व्यवस्थापकाभावात् सर्वे सर्वत्र सङ्कीर्णा एवेति प्रभाकरमतेन पूर्वपक्षः। अनुष्ठाने सन्देहाच्छास्त्रस्यैव अप्रामाण्यमिति भाट्टमतेन पूर्वपक्षः। सामर्थ्यस्यैवार्थनिर्णायकत्वात् शास्त्रस्य प्रामाण्यमेवेति उभयमतसिद्धान्तः।

तदेवमस्मिन् प्रथमाध्याये विध्यर्थवादमन्त्रनामधेयस्मृतिशिष्टाचाराणां धर्मे प्रामाण्यनिरूपणात् प्रमाणाध्याय इति नाम सङ्गत भवति।

चतुर्थः पादः समाप्तः

——

## प्रथमाध्यायस्य चतुर्थपादाधिकरणेषु प्रतिपादिता विषयाः

१. प्रथमाधिकरणे उद्भिदादिपदाना प्रामाण्यमस्त्येवेति निरूपितम्।

२. द्वितीयाधिकरणे मत्वर्थलक्षणाभयात् कर्मनामत्वेन उद्भिच्छब्दस्य प्रामाण्य निरूपितम्।

३. वाक्यभेदभयाच्चित्राशब्दस्य नामत्वेन प्रामाण्यं निरूपितं तृतीयाधिकरणे।

४. अग्निहोत्रशब्दस्य तत्प्रख्यशास्त्रान्नामत्वेन प्रामाण्यं चतुर्थाधिकरणे निरूपितम् ।

५. श्येनशब्दस्य तद्व्यपदेशान्नामत्वेन प्रामाण्यं पञ्चमाधिकरणे प्रतिपादितम् ।

६ वाजपेयशब्दस्य नामत्वेनैव प्रामाण्यमिति षष्ठाधिकरणे निरूपितम् ।

७. अग्न्यादिशब्दानां गुणसमर्पकत्वेन प्रामाण्य सप्तमाधिकरणे निरूपितम् ।

८. बर्हिरादिशब्दाना जातिवाचित्वमेवेति अष्टमाधिकरणे निरूपितम् ।

९. प्रोक्षण्यादिशब्देषु योग एव प्रवृत्तिनिमित्तमिति नवमाधिकरणे निरूपितम् ।

१०. दशमाधिकरणे निर्मन्थ्यशब्दः योगरूढिरिति भाट्टमतेन, यौगिक इति प्रभाकरमतेन निरूपितम् ।

११. वैश्वदेवशब्द. यागनामधेयमेवेति एकादशाधिकरणे प्रतिपादितम् ।

१२. अष्टाकपालादिशब्दानां अर्थवादत्वेनान्वयात् प्रामाण्यमेवेति द्वादशाधिकरणे प्रतिपादितम् ।

१३. यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्व त्रयोदशाधिकरणे निरूपितम् ।

१४. आग्नेयादिशब्दाना ब्राह्मणादिस्तुत्यर्थत्वं चतुर्दशाधिकरणे प्रतिपादितम् ।

१५. यूपादिशब्दानां यजमानस्तुत्यर्थत्वं पञ्चदशाधिकरणे निरूपितम् ।

१६. अपश्वादिशब्दानां गवादिस्तुत्यर्थत्वं षोडशाधिकरणे निरूपितम् ।

१७. बाहुल्येन सृष्टिपदव्यपदेशः सप्तदशाधिकरणे निरूपितम् ।

१८. प्राणभृदादिशब्दानां स्तुत्यर्थत्वं अष्टादशाधिकरणे निरूपितम् ।

१९. वाक्यशेषादेव सन्दिग्धार्थनिर्णय इति एकोनविंशाधिकरणे प्रतिपादितम् ।

२०. सामर्थ्यस्यापि अर्थनिर्णायकत्वं विंशतितमाधिकरणे निरूपितम् ।

प्रथमोऽध्यायः समाप्तः

—:o:—

## द्वितीयाध्यायस्य प्रथम. पादः

[उपजीव्यत्वात्प्रथमाध्याये प्रमाणविचारः कृतः । प्रमाणनिरूपणान्तरम् अस्मिन् द्वितीयाध्याये प्रमेयस्य धर्मस्य भेद उच्यते । अपूर्वमेवात्र धर्मः इति ।]

---

### अपूर्वस्य आख्यातप्रतिपाद्यत्वाधिकरणम्

(२–१–१)

( प्रतिपदाधिकरणम् )

भावार्था. कर्मशब्दाः, तेभ्य: क्रिया प्रतीयेत, एष–ह्यर्थो विधीयते ।१। सर्वेषां भावोऽर्थ इति चेत् ।२। इमे पूर्वपक्षपरे सूत्रे ।

येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि. तस्मात्तभ्य' पराकांक्षाभूतत्वात्स्वे प्रयोगे ।३। येषां तूत्पत्तावर्थे स्वे प्रयोगे न विद्यते तान्याख्यातानि; तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ।४। इयन्ति सिद्धान्तपराणि सूत्राणि ।

विधिवाक्ये पदैस्सर्वैरपि अपूर्वं प्रतिपाद्यते उत एकेनैवेति संशय । तत्र सर्वेषामपि पदाना फलान्वयित्वस्य समानत्वात् सर्वैरपि पदैः अपूर्व प्रतिपाद्यते इति पूर्वपक्षः । अदृष्टत्वादपूर्वस्य एकापूर्वकल्पनेनैव वाक्यस्योपपत्तौ अनेकापूर्वकल्पन गौरवाय भवति । तथा च यद्येकेन पदेनापूर्व प्रतिपाद्यते, तदा पदान्तरन्तु तच्छेषतया अन्वेति । अतश्च एकमेव पदमपूर्वप्रतिपादकम् ।

वर्णकान्तरम्–(भावार्थाधिकरणम्)

द्रव्यगुणकर्मवाचकशब्देभ्यः अपूर्वमुत भावार्थपदादेवेति सशयः । तत्र सिद्धरूपाणां द्रव्यादीना फल प्रति साधनत्वावगमात्, द्रव्यादिशब्दत एव अपूर्व जायत इति पूर्वपक्ष· । क्रियाद्वारमन्तरा द्रव्यादीना फलसाधनत्वाभावात् भावनावाचिना ददाति, यजति इत्याख्यातेनैव अपूर्व प्रतिपाद्यते । अतः आख्यातादेव अपूर्व जायत इति भाट्टमतम् ।

ननु धात्वर्थ एव भावना तदन्या वा इत्यत्र धात्वर्थस्य भावनायां करणत्वेनैवान्वयात् न धात्वर्थो भावना । धात्वर्थातिरिक्तक्रियाया अभावात् न द्वितीयः । इति चेन्न । सर्वधात्वर्थसम्बद्धः करोत्यर्थो हि भावना । तदुक्तमाचार्यैः–

> धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते ।
> तथापि सर्वसामान्यस्वरूपेणैवावगम्यते[1] ।। इति ।

'पचति' इत्यत्र पाकं करोति इति सर्वधात्वर्थव्यतिरिक्ता करोतिरूपा भावना अस्त्येव । अतश्च अन्ये ये भावनापक्षाः, प्रयत्नो भावना, स्पन्दो भावना इत्यादयः युक्त्यसहत्वादुपेक्षिताः । तथा च धात्वर्थव्यतिरिक्तैव

---

1. मी द P. 349

भावाना । एवञ्च 'यजति' इत्यत्र आख्यातस्य भावयेदित्यर्थो भवति । सा च भावना आकांक्षात्रयविशिष्टा । किं भावयेदिति साध्याकांक्षायां स्वर्गं भावयेदिति स्वर्गस्य साधनत्वेनैवान्वयः । केनेति करणाकाक्षाया यागेनेति यागस्य करणत्वेनैवान्वयः । 'कथ' इति कथम्भावाकाक्षायां अग्न्यन्वाधानप्रयाजादिभि. उपकार सम्पाद्य भावयेदिति । एतत्सर्वमपि भावनावाचिन आख्यातस्यैव प्रपञ्च इति भाष्यकारमतम् । अतश्च धात्वर्थातिरिक्ता भावना अस्त्येव । तस्मात् आख्यातप्रत्ययान्तभावार्थ-पदादेव अपूर्व गम्यते इति ।

प्रभाकरमतेन प्रथमवर्णकम् :–

सर्वपदोच्चारणस्य नियोगार्थत्वत् सर्वेषामपि नियोगविषयत्वमेवेति पूर्वपक्षः । सर्वेषां नियोगविषयत्वे परस्परसम्बन्धावगमविरोधदर्शनात् एकस्यैव नियोगविषयता, अन्येषां तु यथाविनियोग विषयता इति ।

**द्वितीयवर्णकम्** :– किं सिद्धद्रव्यगुणादिविषयो नियोगः उत साध्यः यागादिः भावार्थविषयो वेति संशयः । तत्र नैमित्तिकावस्थाया सर्वेषामपि साध्यत्वात् सर्वेषामविशेषेण नियोगविषयता इति पूर्वपक्षः । द्रव्यगुणयोः क्रियायाश्च विधिविषयत्वे क्रियाकारकसम्बन्धावगमविरोधो भवति । तस्मान्नियोग. भावार्थविषय एवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– प्रथमवर्णकपूर्वपक्षे उभयगते सर्वेषां पदानां अन्वयः इति । एकापूर्वकल्पनयैव वाक्योपपत्तौ अनेकापूर्वकल्पनस्यान्याय्यत्वात् एकस्यैव अपूर्व प्रति कारणत्वमिति भाट्टमतम् । सर्वेषा नियोगविषयत्वे परस्परसम्बन्धावगमविरोधात् एकविषय एव नियोग इति प्रभाकरमतम् । नियोगो नाम अपूर्वम् ।

**द्वितीयवर्णकमतभेद** :– क्रियाद्वारमन्तरा द्राव्यादीनि फलसाध-

कानि न भवन्ति। तस्मात् भावार्थस्यैव फलसाधनतेति भाट्टमतम्। क्रियाकारकसम्बन्धविरोधपरिहाराय भावार्थविषय एव नियोग इति प्रभाकरमतम्।

—:o:—

## अपूर्वाधिकरणम्

(२-१-२)

चोदना पुनरारम्भः ।५। इदं सिद्धान्तपरं सूत्रम्।

एकमेव पदं अपूर्वस्य प्रत्यायकमिति सिद्धं पूर्वाधिकरणे। यद्यप्यपूर्वं स्यात्तदा पूर्वाधिकरणस्य साफल्यं भवेत्। तस्मादपूर्वमस्ति न वेति संशयः। 'स्वर्गकामो यजेत' इति शास्त्रप्रमाणात् यागादेव फलसिद्धेः, अपूर्वसद्भावे प्रमाणाभावाच्च अपूर्वं नास्तीति पूर्वपक्षः।

**सिद्धान्तः** :– 'दर्शपूर्णमासाभ्यां' इत्यत्र तृतीयाश्रुत्या दर्शपूर्णमासयोः स्वर्गसाधनत्व जायते। तथा च यागे क्षणिकत्वस्य प्रत्यक्षसिद्धत्वात् न यागात्फलसिद्धिः। मृतदम्पत्योः पुत्रदर्शनमिव, विनष्टयागादपि फलं न भवति। अतः यावत्फलं यागजन्यमपूर्वं वर्तते। तच्च यागावान्तरव्यापारः। तच्च अपूर्वं समुदायापूर्वं, अङ्गापूर्वं, फलापूर्वं, उत्पत्त्यपूर्वं चेति। तस्मादपूर्वमस्तीति भाट्टमतम्।

प्रभाकरमतेन एवमधिकरणरचना :–

नियोगाख्यमपूर्वमस्ति न वेति संशयः। तत्र यागक्रिया सर्वात्मना न नश्यति : किन्तु सूक्ष्मरूपेण स्थित्वा यागफलारम्भाय अवकल्पते। अतश्च अपूर्वमन्तरेण फलसिद्धेः अपूर्वं नास्तीति पूर्वपक्षः। यागक्रिया

सूक्ष्मरूपतया तिष्ठति इत्यत्र प्रमाणाभावात् लिङ्गादिना नियोगस्य अभिधीयमानत्वात् नियोगाख्यमपूर्वमस्तीति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– शास्त्रप्रमाणादेव फलसिद्धेर्नापूर्वमिति भाट्टमतपूर्वपक्षः। सूक्ष्मरूपया यागक्रिययैव फलसिद्धे नापूर्वमिति प्रभाकरमतपूर्वपक्षः: विनष्टयागात्फलसिद्धेः अपूर्वं कल्प्यते इति भाट्टमतम्। वैदिकलिङ्गादिनैव नियोगोऽवगम्यते इति प्रभाकरमतम्।

—:o:—

## कर्मणां गुणप्रधानभावविभागाधिकरणम्

(२–१–३)

तानि द्वैध गुणप्रधानभूतानि।६। यैर्द्रव्यं न चिकीर्ष्यते तानि द्रव्यस्य गुणभूतत्वात्।७। यैस्तु द्रव्य चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्।८।

इमानि सिद्धान्तपराणि सूत्राणि।

'व्रीहीनवहन्ति' इत्यत्र अपूर्वमस्ति न वेति संशयः। 'यजत्यादि-धात्वर्थवदेव अत्रापि अपूर्वमस्त्येव। लोकसिद्धतुषविमोकार्थत्वे दृष्टेऽपि, विधिर्व्यर्थः। तस्मादपूर्वमस्त्येवेति पूर्वपक्षः।

दृष्टे सम्भवति अदृष्टकल्पनाया अन्याय्यत्वात् तुषविमोक एव फलं कल्प्यते। नखनिर्भेदनादिनापि तुषविमोकसम्भवे अवघातेनैवेति नियमात् वैयर्थ्यमपि नास्ति। तस्मादपूर्वमत्र नास्तीति भाट्टमतेन–सिद्धान्तः।

प्रभाकरमतेन एवमधिकरणरचना :–

'सक्तून् जुहोति' इत्यत्र क्रियाप्राधान्याय 'सक्तुभिर्जुहोति' इति परिणामवदत्रापि 'व्रीहिभिर्यजेत' इति कर्तव्य.। तथा च क्रियायाः साक्षादेव नियोगे अन्वय इति पूर्वपक्षः। सक्तुन्यायवैषम्यमत्रास्ति। यतः भस्मीभूतानामुत्तरत्र उपयोगाभावात् व्रीहिषु अवघातः संस्कारद्वारा पुरोडाशोपयोगिता अस्ति। तस्माद्वितुषीभाव एव फल, नत्वपूर्वमिति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– यजत्यादिधात्वर्थवदेव अवघातस्थलेऽपि अपूर्वमस्त्येवेति भाट्टमतेन पूर्वपक्षः। अपूर्वस्य सत्त्वात् क्रियायाः अपूर्वे साक्षादेव अन्वय इति प्रभाकरमतेन पूर्वपक्षः। वितुषीभावदृष्टफलमेवात्र; नत्वपूर्वमिति उभयमतसिद्धान्तः।

---

## सम्मार्जनादीनामप्रधानताधिकरणम्

(२–१–४)

धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ।९।
इदं पूर्वपक्षसूत्रम् ।

तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात् ।१०। द्रव्योपदेश इति चेत् ।११। न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ।१२। इयन्ति सिद्धान्तपराणि सूत्राणि ।

'स्रुचस्सम्मार्ष्टि' इतीदं वाक्य दर्शपूर्णमासयोः श्रूयते। तत्र सम्मार्जन

प्रधानकर्म उत गुणकर्म वेति संशयः। तत्र 'यैर्द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात्[1]' इति जैमिनिसूत्रेण प्रधानकर्मणो लक्षणं ज्ञायते। अतश्च सम्मार्जनस्यापि प्रधानकर्मतैव। तस्मात् अवघातवदेवात्रापि गुणकर्मत्वाभावात् प्रधानकर्मतैवेति पूर्वपक्ष·।

'स्रुचः' इत्यत्र द्वितीया तावत् कर्मकारके विहिता। कर्मत्वं च 'कर्तुरीप्सिततमं कर्म[2]' इति पाणिनिसूत्रानुसारेण ईप्सिततमत्वे एव भवति। तथा च स्रुचां प्रधानत्वात् तदुद्देशेन विधीयमानस्य सम्मार्गस्य गुणत्वात्, सम्मार्जनं गुणकर्मैव इति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतेन एवमधिकरणरचना :–

तत्रैव किं सम्मार्गादे. नियोगे अन्वयः उत नेति संशयः। दृष्ट-संस्काराभावात् नियोगे अन्वय एव अभीष्टो भवति। तथा च प्रयाजादिवदेव नियोगेऽन्वयः। एवञ्च सक्तुन्यायवदेव परिणाम इति पूर्वपक्षः। प्रयाजादीनां तु इतिकर्तव्यतात्वेन अन्वयोऽस्त्येव। अतश्च चिकीर्षितार्थस्य भङ्गे कारणाभावात् सम्मार्गादे दृष्टप्रयोजनाभावेऽपि अदृष्टकार्यत्वमेवास्तु इति प्रभाकरमतेन सिद्धान्त·।

**मतभेदः** :– उभयमतेऽपि स्रगुद्देशेनैव सम्मार्गो विधीयते इति सारः। स च सम्मार्गः गुणकर्मेति भाट्टमतम्। अपूर्वायेतिप्रभाकर–मतम्।

—:o:—

---

1. मी. द. (2-1-7) P. 380
2. पाणिनि सूत्राणि। (1-4-49)

## स्तोत्रादिप्राधान्याधिकरणम्

(२-१-५)

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ।१३।
इदं पूर्वपक्षपरं सूत्रम् ।।

अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ।१४। वशावद्वा गुणार्थं स्यात् ।१५। न श्रुतिसमवायित्वात् ।१६। व्यपदेशभेदाच्च ।१७। गुणश्चानर्थकः स्यात् ।१८। तथा याज्यापुरोरूचोः ।१९। वशायामर्थसमवायात् ।२०। यत्रेति वाऽर्थवत्वात्स्यात् ।२१। न त्वाम्नातेषु ।२२। दृश्यते ।२३। अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ।२४। शब्दपथक्त्वाच्च ।२५। अनर्थकं च तद्वचनम् ।२६। अन्यश्चार्थः प्रतीयते ।२७। अभिधानं च कर्मवत् ।२८। फलनिर्वृत्तिश्च ।२९।
इयन्ति सिद्धान्तपराणि सूत्राणि ।

स्तोत्रशस्त्रयोः किं गुणता उत प्रधानता वेति संशयः । प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । अप्रगीतमन्त्रसाध्यास्तुतिः शस्त्रम्[1]' इति

1. J. N. V. P. 69

स्तोत्रशस्त्रयोर्लक्षणम् । तत्र 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' 'प्रउगं शंसति' इत्यत्र मन्त्रेषु पठ्यमानेषु अनुस्मरणेन देवता संस्क्रियते । अतश्च तुषविमोकवदेव दृष्टार्थत्वात् स्तोत्रशस्त्रयोः गुणकर्मत्वमेवेति पूर्वपक्षः ।

सिद्धान्त :– दृष्टप्रयोजनलाभाय यदि धात्वर्थस्य गुणपरत्वमङ्गीक्रियते, तदा 'आज्यैः स्तुवते' इत्यादिस्थले' आज्यैः देवं प्रकाशयेत्' इत्येव विध्यर्थपर्यवसानात् मुख्यार्थो बाध्येत । अतश्च मुख्यार्थबाधे प्रमाणाभावात् स्तोत्रशस्त्रयोः प्रधानकर्मत्वमेव । यदि दृष्टं प्रयोजनं न भवति तदा अदृष्टमेव अस्तु । अतश्चात्र प्रधानकर्मतैवेति भाट्टमतम् ।

प्रभाकरमतेन अधिकरणरचना :–

'इन्द्रस्य वीर्याणि प्रवोचम्' इति यदेतद्गुणवचनं तत् देवता प्रति गुणभूतमुत प्रधानमिति भाष्ये[1] योऽय संशयस्स एव स्तुतशस्त्रयोः चिकीर्षितार्थत्वमुत विधिविषयत्वमेवेति' प्रभाकरेण[2] अत्र प्रतिपाद्यते । तत्र चिकीर्षितार्थत्वमेव स्तौतिशंसत्योः । तद्यथा–प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानस्यैव स्तौतिशंसत्योर्वाच्यत्वात्, गुणिनिष्ठगुणाभिधानादेव गुणिनः अभिधानं भवति । गुणिनश्च यागसाधनत्वं प्रतीयते । तथा च चिकीर्षितार्थत्वमेव स्तौतिशंसत्योरिति पूर्वपक्षः । 'आज्यैः स्तुवते' इत्यत्र गुणभागित्वमेव श्रूयते, न हविर्भागित्वम् । फलं च कर्मणैव प्रतीयते, न चिकीर्षितदेवतातः । अतः स्तौतिशंसत्योः चिकीर्षितार्थत्वं नास्ति इति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :– स्तौतिशसत्योः गुणकर्मत्वपक्षे मुख्यार्थबाधः । तेन प्रधानकर्मतेति भाट्टमतम् । अचिकीर्षितार्थत्वात् प्रधानकर्मतैवेति प्रभाकरमतम् ॥

—:o:—

---

1. बृहती P. 340
2. Ibid ,,

## मन्त्रविधायकत्वाधिकरणम्

(२-१-६)

विधिमन्त्रयोरैकार्थ्यमेकशब्द्यात् ।३०। इदं पूर्वपक्षपर सूत्रम् ।

अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ।३१। इदं सिद्धान्तपरं सूत्रम् ।

'देवांश्च याभिर्यजते' इत्यादिमन्त्रगतस्य आख्यातस्य विधायकत्वमस्ति न वेति संशयः । तत्र यथा ब्राह्मणगतस्य गुणप्रधानकर्मणोरन्यतर-विधायकत्वम्, तद्वदेव मन्त्रगतस्यापीति पूर्वपक्षः । यच्छब्दादिना विधि-शक्तेः क्षीणत्वात् यच्छब्दसत्त्वे अनुवादत्वमेव । आदिशब्देन उत्तमपुरुष, आमन्त्रणादावपि विधायकत्वं नास्ति । अतः मन्त्रगतस्य आख्यातस्य न विधायकत्वमिति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतेन अधिकरणरचना :-

पूर्वपक्षस्तु पूर्ववदेव । सिद्धान्ते सामान्यभेदो दृश्यते । यत्, ब्राह्मणेन विदितस्य अभिधायकत्वस्य पुनर्विधाने कर्मान्तरत्वप्रसङ्गः । तस्मान्मन्त्राणामविधायकत्वमेवेति प्रभाकरमतम् ॥

---

## मन्त्रनिर्वचनाधिकरणम्

(२-१-७)

तच्चोदकेषु मन्त्राख्या ।३२। इदं सिद्धान्तपरं सूत्रम् ।

मन्त्राणा निर्वचनमस्ति न वेति संशयः। तत्र 'विहितार्थाभिधायको मन्त्रः' इति चेत् 'वसन्ताय कपिञ्जलानालभेत' इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । 'मननहेतुर्मन्त्रः' इत्युक्तौ ब्राह्मणवेदेऽतिव्याप्तिः । अतश्च मन्त्रलक्षस्य अतिव्याप्त्यादिदोषसम्भवात् नास्ति मन्त्रलक्षणमिति पूर्वपक्षः ।

'तच्चोदकेषु मन्त्राख्या'[1] इति जैमिनिना लक्षणमुक्तम् । अस्य सूत्रस्य भाष्यं कुर्वता शबरस्वामिना 'अभिधानस्य चोदकेष्वेवञ्जातीयकेष्वभियुक्ता उपदिशन्ति' मन्त्रानधीमहे' 'मन्त्रानध्यापयामः' 'मन्त्राः वर्तन्ते' इति प्रायिक लक्षणं उक्तम् । एवञ्च माधवाचार्या अपि इममेवाभिप्रायमङ्गीकुर्वन्ति । मन्त्रोऽयमिति मन्त्राणां समाख्यानमेव मन्त्रलक्षणम् । अतः ये मन्त्राः मन्त्रत्वेन प्रसिद्धा. तत्र मन्त्रोऽयमिति समाख्यानात् पूर्वोक्ता दोषा न भवन्ति ।

**प्रभाकरमतम्** :– 'तच्चोदकेषु मन्त्राख्या' इतीदं सूत्रं मन्त्रार्थाभिधानपरमेव । न तु मन्त्रलक्षणाभिधानपरम् । अत एव 'प्रायिक मन्त्रलक्षणम्' इत्युक्तवान् भाष्यकारः । इति प्रभाकराशयः ।

---

1. मी द P. 419

## ब्राह्मणनिर्वचनाधिकरणम्

(२–१–८)

शेषे ब्राह्मणशब्द ।३३। इदं सिद्धान्तपर सूत्रम् ।

'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यत्र ब्राह्मणलक्षणमस्ति न वेति संशयः। तत्र मन्त्रभागापेक्षया भागान्तराणां हेतुनिर्वचनादयो[1]ऽपि वर्तन्ते। तथा च एष्वन्यतम ब्राह्मणमित्युक्ते मन्त्रेष्वपि हेत्वादयो वर्तन्ते। एवञ्च 'इतिकरणबहुलं ब्राह्मणम्' अथवा 'आख्यायिकारूपं ब्राह्मणम्' इत्यादिलक्षणेषु अतिव्याप्त्यादिदोषा भवन्ति। अतः ब्राह्मणस्य निर्दुष्ट लक्षणं नास्ति इति पूर्वपक्ष ।

'शेषे ब्राह्मणशब्दः' इति जैमिन्युक्तसूत्रानुसारेण 'मन्त्रातिरिक्तत्वमेव ब्राह्मणत्वम्' इति ब्राह्मणलक्षण पर्यवसितम् । प्रभाकरमते विषयविचारस्समान एव। किन्तु इदमधिकरण न मन्त्रलक्षणाभिधायकाधिकरणम्, किन्तु ब्राह्मणशब्दार्थकथनपरमेवेति ।

—.o:—

1. J. N. V. P. 72

## ऊहाद्यमन्त्रताधिकरणम्

(२-१-९)

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ।३८।
इदं सिद्धान्तपरं सूत्रम् ।

ऊहप्रवरनाम्ना मन्त्रत्वमस्ति न वेति संशयः । मन्त्रेण सहैक-वाक्यत्वान्मन्त्रत्वमस्तीति पूर्वपक्षः । याज्ञिकप्रसिद्धमन्त्रलक्षणाभावान्नास्ति मन्त्रत्वमिति भाट्टमतम् ।

क्रतुषु ऊहप्रवरनामधेयैः मन्त्रकार्यं क्रियते । अतश्च अमन्त्रै-र्मन्त्रकार्यं न निष्पद्यत इति मन्त्रत्वमस्त्येवेति पूर्वपक्षः । अमन्त्राणामपि मन्त्रोपकारकत्वं न विरुध्यते । अतः ऊहप्रवरनाम्ना अमन्त्रत्वमेवेति प्रभाकरमतम् ।

**मतभेदः** :— अमन्त्रत्वसाधकयुक्तावेव भेदः । अन्यत् सर्वं समानमेव ।।

— —

## ऋग्लक्षणाधिकरणम्

(२-१-१०)

तेषां ऋग्यत्रार्थवशेन पादव्यवस्था ।३५।
इदं सिद्धान्तपरं सूत्रम् ।

मन्त्रब्राह्मणयोः प्रसङ्गानन्तर तत्प्रसक्तानुप्रसक्त्या ऋगादिलक्षण-मभिधीयते । 'तेषां ऋग्यत्रार्थवशेन पादव्यवस्था[1]' इति जैमिनिना ऋग्लक्षणमुक्तम् । अत्र प्रभाकरमते विशेषविचारो नास्ति ।

---

## सामलक्षणाधिकरणम्

(२-१-११)

गीतिषु सामाख्या ।३६। इद सिद्धान्तपरं सूत्रम् ।

'गीतषु सामाख्या[2]' इति साम्नो लक्षण जैमिनिनोक्तम् । अत्रापि विशेषविचारो नास्ति ।।

---

## यजुर्लक्षणाधिकरणम्

(२-१-१२)

शेषे यजुश्शब्दः ।३७। इद सिद्धान्तपरं सूत्रम् ।

भाट्टमतानुसार ऋक्सामयजुषां लक्षणविचार माधवाचार्यः अत्र प्रदत्तवान् । तत्र ऋक्सामयजुषां लक्षणमस्ति न वेति संशयः । सङ्करस्य दुष्परिहारत्वात् नास्ति ऋक्सामयजुषा लक्षणमिति पूर्वपक्षः । पादेन

1. मी. द. P. 426 (2-1-10)
2. Ibid P. 427 (2-1-11)

अर्थेन च उपेता वृत्तबद्धा मन्त्रा ऋचः इति ऋग्लक्षणम् । गीतिरूपा मन्त्राः सामानि इति सामलक्षणम् । वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्राः यजूंषि इति यजुषो लक्षणम् । एवञ्च न क्वापि सङ्कर इति भाट्टमतम् ॥

—:o:—

## निगदानां यजुष्ट्वाधिकरणम्

(२-१-१३)

निगदो वा चतुर्थं स्याद्धर्मविशेषात् ।३८।
इदं पूर्वपक्षपरं सूत्रम् ।

व्यपदेशाच्च ।३९। यजूंषि वा तद्रूपत्वात् ।४०। वचनाद्धर्मविशेषः ।४१। अर्थाच्च ।४२। गुणार्थो-व्यपदेशः ।४३। सर्वेषामिति चेत् ।४४। न ऋग्व्य-पदेशात् ।४५। इयन्ति सिद्धान्तपराणि सूत्राणि ।

'प्रोक्षणीरासादय' इत्यादयो निगदमन्त्राः किं ऋक्सामयजुर्भ्यो भिन्ना उत यजुर्लक्षणान्तर्गता वेति संशयः । ऋक्सामलक्षणयोरनन्तर्भा-वान्न तत्रान्तर्भवन्ति निगदमन्त्राः । धर्मभेदाच्च न यजुर्लक्षणेऽपि । 'उपांशु यजुषा' 'उच्चैर्निगदेन' इति हि धर्मभेदः । अतश्च ऋक्साम-यजुर्भिन्ना एव मन्त्रा इति पूर्वपक्षः ।

'बहिर्ब्राह्मणा भोज्यन्ताम्' 'परिव्राजकास्त्वन्तः' इत्यत्र यथा परि-व्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषः । त देव निगदा अपि यजु-

र्लक्षणान्तर्गता एव। उच्चैस्त्वधर्मस्तु परप्रत्यायननिमित्त एव इति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :- उपांशुत्व उच्चैष्ट्वधर्मभेदात्, अविरोधासिद्धयर्थं चतुर्थ मन्त्रजातमिष्यते। अतः निगदो नाम चतुर्थः मन्त्रः अस्तीति पूर्वपक्षः। यजूष्येव निगदाः न तु भिन्नाः। धर्मभेदोऽपि गोबलीवर्द-न्यायेनोपपद्यते।

मन्त्रभेदः :- धर्मभेदादभेद इति पूर्वपक्षस्समान एवास्ति। यजुष्येव निगदानामन्तर्भाव इति सिद्धान्तः। तत्र धर्मभेदः पूजानिमित्त एवेति भाट्टमतम्। गोबलीवर्दन्यायेन भेदो युज्यत इति प्रभाकरमत-मिति।

---

## एकवाक्यत्वलक्षणाधिकरणम्

(२-१-१४)

अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यात् ।४६।
इद सिद्धान्तपरं सूत्रम्।

'देवस्य त्वा सवितु. प्रसवे' अश्विनो बाहुभ्या, पूष्णो हस्ताभ्यां, अग्नये जुष्टं निर्वपामि[1]' इत्यादिः दर्शपूर्णमासयोः श्रूयते। अत्र किं वाक्यानि भिन्नानि उत एकमेव वाक्यमिति संशयः। 'इद सर्वमपि एकमेव वाक्यम्' इत्यत्र नियामकाभावात् वाक्यनि भिन्नान्येव। भिन्नार्थ-

1. J. N. V. P. 75

कत्वादेषां वाक्याना अर्थैक्यं वाक्यैक्ये कारणमिति न। अपि च बहूनां वाक्यानां सत्वात् वाक्यभेदात् पदसमूहोऽपि वाक्यं न भवति। तस्मादत्र वाक्यानि भिन्नान्येव इति पूर्वपक्षः।

'यद्विभागे साकाक्ष अविभागे च एकार्थ, तदेक वाक्य'[1] इति वाक्यलक्षणम्। तथा च 'अग्नये जुष्ट निर्वपामि' इत्यस्य यदि पृथक् क्रियते तदा देवस्य त्वा' इत्यादिः साकाक्षो भवति। तथा च एकवाक्यत्वे निर्वापरूपोऽर्थः कृत्स्नस्य एकवाक्यस्य भवति। तेन च एकवाक्यत्वं सिद्धयति। तथा च अनियतपरिमाणस्य यजुषः अवसानं ज्ञातमिति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :–'इषेत्वेत्याच्छिनत्ति' इत्यत्र यजु.परिमाणविचारः प्रभाकरेण प्रतिपादित.। विनियोगानुसारादर्थवशाच्च यजुषः परिमाण न ज्ञायते। तद्यथा–विनियोगेन तादर्थ्य प्रतीयते। न तु परिमाणम्। अर्थप्रतिपादन च मन्त्राणा यथा विनियोगानुसारमेव भवतीति नार्थादपि परिमाणं ज्ञातु शक्यते इत्येव उभयथापि न यजु: परिमाणनिर्णय इति पूर्वपक्षः। अर्थैकत्वात् साकाक्षत्वाच्च एक यजुरिति। अतश्च एकवाक्यतायाः सिद्धत्वात् यजु· परिमाणनिर्णयस्सञ्जात इति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– सिद्धान्तपक्षस्तु समान एव। एकवाक्यताबोधकस्य दुर्वचत्वात् यजुःपरिमाणं नैवावगन्तु शक्यते। इति भाट्टमते पूर्वपक्षः। विनियोगवशादर्थवशाच्च यजुःपरिमाणं ज्ञातुं न शक्यत इति प्रभाकरमतेन पूर्वपक्षः।

—:o:—

---

1. J. N. V P. 75

## वाक्यभेदाधिकरणम्

(२-१-१५)

समेषु वाक्यभेदस्स्यात् ।४७।

इद सिद्धान्तपरं सूत्रम् ।

'इषेत्वोर्जेत्वे'त्ययं पदसमुदायः एकः भिन्नो वेति संशयः । अदृष्ट-द्वयकल्पनापेक्षया एकादृष्टकल्पनैव युक्ता । अतः एक एव मन्त्र इति पूर्वपक्षः । 'इषेत्वेति छिनत्ति' ऊर्जेत्वेति अनुमार्ष्टि' इति पलाशशाखायाः छेदने मार्जने च क्रियापदाध्याहारेण विनियुक्तौ । अतश्त्र वाक्यद्वयमिति यजुर्वेदः अत्र इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–**

अनुष्ठेयार्थप्रकाशनपदाभावात् 'इषेत्वोर्जेत्वा' इत्यस्य सर्वस्यापि छेदने (शाखाच्छेदने) एव विनियोगः । अध्याहृत एकमेव पदं सर्वार्थ-मिति पूर्वपक्ष । अध्याहृतस्य एकस्य अनेकार्थतया गुणप्रधानार्थता दृष्टार्थता वा कल्पनीया भवति । तदुभयमपि अन्याय्यमेव । अतश्ज यथा विनियोग वाक्यभेद एव ।

**मतभेदः** :– एकादृष्टकल्पनयैव विनियोगसिद्धौ भिन्नवाक्यता नास्तीति पूर्वपक्ष. भाट्टमते । अनुष्ठेयार्थप्रकाशनपदयोरभायात् एक-वाक्यतैवेति प्रभाकरमते पूर्वपक्षः । भिन्नवाक्यत्वमेवेति सिद्धान्तः । तत्र क्रियापदाध्याहारेणेति भाट्टमते । यथाविनियोगमिति प्रभाकरमते इति ।।

---

## अनुषङ्गाधिकरणम्

(२–१–१६, १७)

अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ।४८।
इदं सिद्धान्तपरं सूत्रम् ।

'याते अग्ने अयाशया, तनूर्वर्षिष्टा गह्वरेष्टा उग्रं वचो अपावधीं-त्वेषं वचो अपावधीत्स्वाहा । याते अग्ने रजाशया । याते अग्ने हराशया'[1] इति श्रूयते । तत्र द्वितीयतृतीयस्थले अध्याहारो, अनुषङ्गो वेति संशयः । तत्र स्वाहान्तमन्त्रस्य सम्पूर्णवाक्यत्वात् निराकांक्षो भवति । किन्तु 'याते अग्नेरजाशया, याते अग्नेहराशया' इत्यत्र आकांक्षापूरणे लौकिकपदाध्याहारः कर्तव्य एव भवति । 'तनूर्वर्षिष्ट' इत्यादेः प्रथममन्त्रशेषत्वान्नानुषङ्ग इति पूर्वपक्षः ।

वैदिकवाक्याकांक्षायाः वैदिकवाक्यैरेव निर्वर्त्यमानत्वात् तनूर्वर्षिष्ट' इत्यन्यशेषस्यैव अनुषङ्गः । अध्याहारापेक्षया अनुषङ्गे एव लाघवं भवति । तस्मादनुषङ्ग एवेति भाट्टमतेन सिद्धान्त ।

**प्रभाकरमतम् :–** यत्र बहूनि वाक्यानि शेषापेक्षाणि, वाक्यशेषस्त्वेक एव । तत्र किं अध्याहारः, उत अनुषङ्ग इति संशयः । तत्र यत्र

1. J. N. V. P. 77

आकांक्षा, योग्यता, सन्निधिश्च भवति, तत्रैव सम्बन्धो भवति। अतश्च अध्याहारेण आकांक्षा पूरणीया इति पूर्वपक्षः। यद्यप्यत्र सजातीयवाक्य-शेषान्तरं नास्ति किन्तु विजातीयशेषि विद्यते। अतः यो यमपेक्षते स तस्य व्यवधायको न भवति। अतः पूर्ववाक्यशेषस्यैव अनुषङ्ग इति प्रभाकर-मतेन सिद्धान्तः।

अत्र भाट्टप्रभाकरमतयोः पूर्वोत्तरपक्षौ समावेव॥

सप्तदशाधिकरणम्—इदमप्यनुषङ्गाधिकरणमेव। यत्र बहूनि वाक्यानि शेषापेक्षाणि शेषश्चैक एव तत्र अनुषङ्ग इति पूर्वाधिकरणे प्रतिपादितम्। अत्र तु यत्र शेषीणि बहूनि, शेषश्च साकांक्षः तत्र विचार क्रियते इति अधिकरणभेदः।

'चित्पतिस्त्वा पुनातु' 'वाक्पतिस्त्वा पुनातु' देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः।[1] इत्यत्र प्रथमद्वितीय-मन्त्रयोः तृतीयमन्त्रशेषस्य अनुषङ्गोऽस्ति नवेति संशयः। तत्र प्रथम-द्वितीयमन्त्रयोः निराकांक्षत्वात् 'अच्छिद्रेण' इत्यादितृतीयान्तशेषः नानुष-ज्यते। तस्मान्नानुषङ्ग इति पूर्वपक्षः।

तृतीयमन्त्रेऽपि क्रियायास्सत्त्वात् तत्रापि शेषः निरपेक्ष एव। तस्मात् शेषस्यैव आकांक्षायास्सत्त्वात् त्रिष्वपि मन्त्रेषु अन्वेति इति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :— प्रधानानां निराकांक्षत्वात् साकांक्षस्य 'अच्छि-द्रेण' इत्यादेः एकेनैव निराकाक्षता भवति। अतश्च आनन्तर्यात्तृतीय-मन्त्रेणैव सम्बध्यते। तथा च नानुषङ्ग इति पूर्वपक्षः। यत्र अर्थभेदः

---

1. J. N. V. P. 77

तत्र एकेनैव सम्बध्यते । अत्र अर्थभेद एव नास्तीति पूर्वमन्त्रयोरय-मनुषज्यते इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– मतद्वयेऽपि युक्तिभेद एव, न तु पूर्वोत्तरपक्षभेदः । प्रभाकरमते इद वर्णकान्तरमेव न तु अधिकरणान्तरम् । इदमेवाधिकरणं माधवः अधिकरणान्तरेण प्रतिपादितवान् । तत्तु भाष्यशास्त्रदीपिकयोर-नुसार वर्णकान्तरमेवेति समुचितम् ।।

—:o:—

## व्यवेतानुषङ्गाधिकरणम्

(२–१–१८)

व्यवायान्नानुषज्येत ।४९। इदं सिद्धान्तपरं सूत्रम् ।

सन्ते प्राणो वातेन गच्छता, समङ्गानि यजत्रैः संयज्ञपतिराशिषा[1]" इत्यत्र अनुषङ्गोऽस्ति न वेति सशयः । तत्र 'यज्ञपतिः' इत्यस्मिन् तृतीयमन्त्रे 'सम्' इत्युपसर्गस्य क्रियाकांक्षायास्सत्त्वात् तत्र 'गच्छता' इत्यस्य अनुषङ्ग एवेति पूर्वपक्षः ।

मध्यगमन्त्रे 'समङ्गानि' इति बहुवचननिर्देशात् 'गच्छता' इत्येक-वचनस्य अनुषङ्गो न भवति । अतश्च द्वितीयमन्त्रव्यवधानान्न तृतीयमन्त्रेऽनुषङ्गः । तस्मात् 'गच्छता' इत्यस्य द्वितीयतृतीयमन्त्रयोः यथोचित-मध्याहार एव, न तु अनुषङ्ग इति भाट्टमतेन सिद्धान्तः ।

सजातीयेन व्यवधानादध्याहार एव, नत्वनुषङ्ग इति प्रभाकर-मतम् । इति ।

——

1. J N. V. P. 78

## द्वितीयाध्यायप्रथमपादाधिकरणेषु

## प्रतिपादिता विषयाः

१. प्रथमाधिकरणे अपूर्वस्य आख्यातप्रतिपाद्यत्व निरूपितम् ।

२. फलोत्पत्तिपर्यन्तं अपूर्व वर्तत इति द्वितीयाधिकरणे निरूपितम् ।

३. स्रगुद्देशेन ससर्गो विधीयते इति तृतीयाधिकरणे प्रतिपादितम् ।

४. स्तोत्रशस्त्रयोः प्रधानकर्मत्वमेवेति चतुर्थाधिकरणे प्रतिपादितम् ।

५. मन्त्रगताख्यातस्य विधायकत्वं नास्तीति पञ्चमधियरणे निरूपितम् ।

६. षष्ठाधिकरणे मन्त्रलक्षणं निरूपितम् ।

७. सप्तमाधिकरणे ब्राह्मणलक्षणं निरूपितम् ।

८. ऊहप्रवरनाम्नां अमन्त्रत्वमिति अष्टमाधिकरणे निरूपितम् ।

९. नवमाधिकरणे ऋग्लक्षणं निरूपितम् ।

१०. सामलक्षणं दशमाधिकरणे प्रतिपादितम् ।

११. यजुर्लक्षणं एकादशाधिकरणे निरूपितम् ।

१२. निगदानां यजुर्लक्षणान्तर्गतत्वं द्वादशाधिकरणे निरूपितम् ।

१३. त्रयोदशाधिकरणे एकवाक्यतानिरूपणं कृतम् ।

१४. चतुर्दशाधिकरणे वाक्यभेदाद्यजुर्भेदनिरूपणं कृतम् ।

१५. वैदिकवाक्याकांक्षायां अनुषङ्ग एवेति पञ्चदश षोडश सप्तदशाधिकरणेषु अनुषङ्गनिरूपण कृतम् ।

१६. अष्टादशाधिकरणे अङ्गापूर्वभेदनिरूपणं कृतम् ।

## द्वितीयाध्यायस्य प्रथमपादः समाप्तः

---

## अथ द्वितीयाध्याये द्वितीयः पादः

### अङ्गापूर्वभेदाधिकरणम्

(२-२-१)

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ।१।
इदं सिद्धान्तपरं सूत्रम् ।

अस्मिन् द्वितीयाध्यायस्य द्वितीयपादे शब्दान्तरं, अभ्यासः, संख्या, संज्ञा, गुण, प्रकरणान्तरैः कर्मभेदो निरूप्यते । तत्र 'सोमेन यजेत' 'हिरण्यमात्रेयाय ददाति' 'दक्षिणानि जुहोति[1]' इति । एषु वाक्येषु अपूर्वमेक भिन्नं वेति संशयः । तत्र श्रूयमाणाना वाक्यानां आख्यातस्य एकत्वात् भावनाप्येकैव । धातोः भावनावाचित्वाभावेन धातुभेदस्य भावनाभेदे प्रयोजकत्वं नास्ति । तस्मादेकैव भावनेति पूर्वपक्षः ।

आख्यातमेव भावनायाः प्रयोजकम् । तथा च प्रतिधातु आख्यातस्य भिन्नत्वात् व्याकरणेन बहूनां धातूना उपरि एकस्य आख्यातस्य अविधानाच्च आख्यातभेदेन भावनाभेदसिद्धिः । तथा च कर्म भिद्यते । अतः शब्दान्तरात् कर्मभेदः अस्त्येवेति भाट्टमतेन सिद्धान्तः ।

---

1. J. N. V. P. 79

**प्रभाकरमतम्** :– यजेत, दद्यात्, जुहुयात्, इत्यत्र सर्वलिङ्प्रत्यय-वाच्यो यो नियोगः, तस्यैकत्वात् कृत्स्नं शास्त्रमपि एकमेव। धातोः नियोगवाचकत्वं नास्तीति ज्ञातमेवेति पूर्वपक्षः। प्रतिधातुलिङ्प्रत्ययस्य भिन्नत्वात् लिङ्प्रत्ययवाच्यनियोगोऽपि भिन्न एवेति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– यागदानहोमस्थले आख्यातभेदात्कर्म भिद्यते इति भाट्टमतम्। लिङ्प्रत्ययभेदाच्छास्त्रभेद इति प्रभाकरमतम्। कर्मभेदः अध्यायार्थो न भवति। किन्तु शास्त्रभेद एव। शास्त्रभेदाच्च कर्मभेद इति प्रभाकरमते विशेषः।

—:o:—

## समिधाद्यपूर्वभेदाधिकरणम्

(२–२–२)

एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात् ।२।

इदं पूर्वपक्षपरं सूत्रम्।

दर्शपूर्णमासयोः 'समिधो यजति' 'तनूनपातं यजति' इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति[1] 'इत्यत्र पञ्चप्रयाजाः श्रूयन्ते। प्रतिधातु-भेदादाख्यातभेदो भवतीति पूर्वाधिकरणे प्रतिपादितम्। तद्वदत्र धातु-भेदाभावात् आख्यातस्य एकत्वात् एकैव भावनेति पूर्वपक्षः।

'यजति' पदाभ्यासात्कर्मभेदोऽस्त्येव। यद्येकमेव कर्म स्यात्तदा

1. J. N. V. P. 80

अभ्यासो निरर्थक एव भवेत् । यदि 'समिधो यजति' इति वाक्येन समिन्नामकं यागमनूद्य अन्यैश्चतुर्भिः यजतिपदैः यागानुवादः तदा तनून-पादादयः चत्वारो गुणाः द्रव्यत्वेन, देवतात्वेन वा विधीयन्ते । अतश्च अभ्यासवैयर्थ्याभावान्न कर्मभेदः । इति चेदुच्यते । तनूनपादादीनां यागनामत्वेन गुणविधित्व न सम्भवति । यजतिपदाना विधायकत्वान्ना-नुवादकत्वम् । विधित्वस्य श्रौतत्वात् । नचात्र सञ्ज्ञाभेदादभेदः । किन्तु यत्र यागावगमात्पूर्वमेव सञ्ज्ञावगमः तत्रैव सञ्ज्ञया भेदः । अत्र तु प्रधान एव यागः अवगम्यते । अतश्च अभ्यासात्कर्मभेद एवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–** पूर्वाधिकरणे प्रभाकरमते कृतानुबन्धत्वात् शास्त्रभेदात् कर्मभेद इति प्रतिपादितः । किन्तु यत्र अनुबन्धोऽप्येक एव तत्र कर्मभेदोऽस्ति न वेति संशयः । तत्र अनुबन्धस्य एकत्वात् कर्मभेदो नास्ति । अपि च अर्थान्तरप्रतिपादकत्वान्न तदभावप्रयुक्तमानर्थक्यमस्ति । अतश्च एकमेव कर्मेति पूर्वपक्षः । अनुबन्धभेदोऽप्यस्त्येव । किन्तु पूर्वाधिकरणवन्न विशेषतया । अतश्च 'यजति' इत्यत्र श्रुत्युक्तविधेयत्वस्य स्पष्टतया विहितस्य पुनर्विधानायोगाच्च अनुबन्धभेदोऽस्त्येव । तेन च शास्त्रभेदात्कर्मभेद इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः :–** एकमेव कर्मेति पूर्वपक्षः । तत्र धातुभेदाभावान्न कर्मभेद इति भाट्टमते । अनुबन्धस्य एकत्वान्न शास्त्रभेद इति प्रभाकरमते । कर्मभेदः अस्त्येवेति उभयमतसिद्धान्तः । विधिपुनश्श्रवणरूपस्याभ्यासस्य सत्त्वादिति ।

—:o:—

## आधाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम्

(२–२–३)

### ( पौर्णमास्यधिकरणम् )

प्रकरणन्तु पौर्णमास्यां रूपावचनात् ।३। विशेषदर्श-नाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात ।४। गुणस्तु-श्रुतिसंयोगात् ।५। इयन्ति पूर्वपक्षपराणि सूत्राणि । चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वा-त्तस्य तस्योपदिश्येत ।६। व्यपदेशश्च तद्वत् ।७। लिङ्गदर्शनाच्च ।८। इयन्ति सिद्धान्तपराणि सूत्राणि ।

'य एवं विद्वान् पौर्णमासी यजते' 'य एवं विद्वानमावास्यां यजते' इत्यस्मिन् विद्वद्वाक्ये कर्मभेदोऽस्ति न वेति संशयः । तत्र अभ्यासात्कर्मभेदोऽस्त्येव । न तु अग्नेयादयः षड्यागा विधीयन्ते । न च द्रव्यदेयतयोर-भावान्न कर्मान्तरमिति वाच्यम् । सर्वसाधारणस्य ध्रौवाज्यस्य सत्वात् ।

तद्यथा :– ध्रौव साधारणं द्रव्यं देवतामन्त्रवर्णिकी ।
रूपवन्तावतो यागौ विधीयेते पृथक्तया[1] । इति ।

---

1. J. N. V. P. 82

किञ्च षड्यागानुवादकावेवैतौ, इति चेद्विधेयान्तरस्य अदर्शनात् विद्वद्वाक्येन सह एतद्वाक्यद्वयमपि व्यर्थमेव भवति। अतोऽत्र कालविधानात्कर्मान्तरमेवेति पूर्वपक्षः।

ध्रौवाज्यात् द्रव्यप्राप्तिरिति तत्तथास्तु। किन्तु देवता न केनापि लभ्यते। वार्त्रघ्नी, वृधन्वतीमन्त्राभ्यामपि न देवताप्राप्तिः। तत्र लिङ्गक्रमाभ्यां अग्निसोमविषयस्यैव उपलब्धत्वात् अपि च 'वार्त्रघ्नी-पौर्णमास्यां' इत्यादिमन्त्रयुगलेन कालद्वयमेव विधीयते। अतश्च कर्मान्तरविधायकत्वाभावात् कालवाचिपौर्णमासी अमावास्याशब्दाभ्यां तत्तत्कालविशिष्टयागत्रिकमेव अनूद्यते। समुदायद्वयसिद्धिरेव अनुवाद-प्रयोजनम्। अनुवादाभावे प्रयाजादीनां आग्नेयादीना च गुणप्रधानभावो न सिध्येत्। तेन च 'दर्शपूर्णमासाभ्या स्वर्गकामो यजेत' इत्यत्र द्विवचनमपि उपपन्नं भवति। अतश्च कर्मभेदो नास्तीति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :- पूर्वाधिकरणोक्तन्यायाविशेषादेवात्रापि शास्त्र-भेदात्कर्मभेद इति पूर्वपक्षः। विद्वद्वाक्ये अग्न्यादि वाक्येषु च काल-सम्बन्धश्रवणात् तस्य ग्रहणेन अनुवादत्व सिद्धयति। अतश्च आग्नेयादिषु प्रवृत्तिनिमित्तसद्भावात् नानुबन्धभेदः। अतश्च न शास्त्रभेदाभावान्न कर्मभेद इति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :- कर्मान्तरमेव विद्वद्वाक्ये इति उभयमतपूर्वपक्षः। तत्र सर्वसाधारणस्य ध्रौवाज्यस्य सत्त्वात् रूपवत्त्वाच्च कर्मान्तरमिति भाट्टमते। अनुबन्धस्य अविशेषतया कर्मान्तरमेवेति प्रभाकरमते। देवताया अप्राप्तेर्न कर्मान्तरमिति भाट्टमतम्। कालसम्बन्धस्य उभयत्र सत्त्वाद्वि-द्वद्वाक्ये षड्यागानामनुवाद इति प्रभाकरमतम्।

---

## उपांशुयाजापूर्वताधिकरणम्

(२–२–४)

पौर्णमासीवदुपांशुयाजः स्यात् ।९।
इदं पूर्वपक्षपरं सूत्रम् ।।

चोदना वाप्रकृतत्वात् ।१०। गुणोपबन्धात् ।११।
प्राये वचनाच्च ।१२। इयन्ति सिद्धान्दराणि सूत्राणि ।

'जामि वा एतद्यज्ञस्य क्रियते । यदन्वञ्चौ पुरोडाशौ उपांशुयाज-मन्तरा यजति । विष्णुरूपांशु यष्टव्योऽजामित्वाय । प्रजापतिरुपांशु यष्टव्योऽजामित्वाय । अग्नीषोमावुपाशु यष्टव्यो अजामित्वाय' । इत्यत्र विष्ण्वादिवाक्येषु विहितस्य समुदायस्य अनुवादो विधिर्वेति संशयः । तत्र समुदायानुवाद एवेति पूर्वपक्षः ।

तत्र प्रथमे जामितादोषेण उपक्रम, अजामित्वेन च उपसंहारः । तथा च सर्वस्यापि महावाक्यत्वप्रतीतेः 'यजति' पदेन यागस्य विधिः । ध्रौवाज्यस्य प्राप्तत्वात् न द्रव्याभावः शङ्कनीय । अपि च देवताभावोऽपि न शङ्कनीयः । यतः नानाशाखागत उपाशुयाजक्रमे पठितैः वैष्णवप्राजापत्याग्नीषोमीयैः विकल्पः । अतश्च यागविधिरेवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– तत्रैव 'उपाशुयाजमन्तरा' इत्यत्र उपांशुयाजपदं

'विष्णुरूपांशुयष्टव्योऽजामित्वाय' इत्यादिवाक्यत्रयगतस्य अनुवादकम् । रूपाभावादिति पूर्वपक्षः । विष्ण्वादिवाक्यस्य विधायकत्वाभावात् एकवाक्यत्वश्रवणाच्च उपांशुयाजपदं नानुवादकम् । तेन च विष्ण्वादिवाक्यस्य अनुवादकत्वाप्रतीतेः । एकवाक्यत्वे सम्भवति वाक्यभेदस्य अन्याय्यत्वान्न कर्मान्तरमिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– अनुवादो विधिर्वा अत्रेति सशये यागत्रयानुवाद एवेति पूर्वपक्षः । विष्ण्वादिवाक्येषु विधायकत्वाभावात् एकवाक्यत्वाच्च विधिरेवेति सिद्धान्तः । एवञ्च पूर्वपक्षसिद्धान्तौ उभयमतेऽपि समावेव ।

---

## आघाराद्यपूर्वाधिकरणम्

(२–२–५)

आघाराग्निहोत्रमपूर्वत्वात् ।१३।
इदं पूर्वपक्षपरं सूत्रम् ।

संज्ञोपबन्धात् ।१४। अपक्रतत्वाच्च ।१५। चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेः गुणार्थे न पुनः श्रुतिः ।१६। इयन्ति सिद्धान्तपराणि सूत्राणि ।

अग्निहोत्रवाक्यं आघारवाक्य च कि कर्मसमुदायानुवादकमुत कर्मविधायकं वेति सशयः । तत्र 'अग्निहोत्र जुहोति' इद वाक्यं 'दध्ना जुहोति' 'पयसा जुहोति' इत्येतत्कर्मसमुदायानुवादकम् । तथैव 'आघारमाघारयति' इत्येतद्वाक्य 'ऊर्ध्वमाघारयति' 'सन्ततमाघारयति'

इत्येतत्कर्मसमुदायानुवादकम् । रूपाभावाद्विधित्वं नास्ति । अतश्च अनुवाद एवेति पूर्वपक्षः ।

अग्निहोत्रवाक्यस्य विधायकत्वाभावात् गुणिनः असिद्धौ दध्यादिवाक्येन गुणो न विधातुं शक्यते । विशिष्टकर्मविधाने गौरवं भवति । अतश्च अग्निहोत्रवाक्ये आघारवाक्ये च कर्म विधीयते । द्रव्यन्तु दध्यादिवाक्यैर्विधीयते । अतश्च अग्निहोत्र आधारवाक्ये कर्मविधिरेवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– 'भावार्थाःकर्मशब्दाः[1]' इत्युक्तत्वात् 'दध्ना जुहोति' इत्यत्रापि कर्मविधिः । अतश्च अग्निहोत्रवाक्येन विधिसमुदायानुवादः । एवमेवाघारवाक्येऽपि । तस्मात् अग्निहोत्रादिपदं नामधेयमिति पूर्वपक्षः । द्रव्यसमर्पकस्य दध्यादिवाक्यस्य विधिपरत्वे प्रमाणाभावात्, प्रकृतकर्मणामभावाच्च न कर्मसमुदायानुवादः । सिद्धद्रव्यादेः अविधेयत्वेऽपि उपादानमात्रत्व सम्भवत्येव । एवञ्चाग्निहोत्रवाक्येन आघारवाक्येन च कर्म विधीयते इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– द्रव्यदेवतालक्षणस्य स्वरूपस्याभावात् आघाराग्निहोत्रवाक्ये न कर्मविधायके इति भाट्टमते पूर्वपक्षः । 'दध्ना जुहोति' इत्यत्र कर्मविधित्वसम्भवात् अग्निहोत्रवाक्यं समुदायानुवादकमिति प्रभाकरमते पूर्वपक्षः । दध्यादीनां द्रव्यसमर्पकत्वमेव न तु कर्मविधायकत्वम् । अतश्च आघाराग्निहोत्रवाक्ये कर्मविधिरेव, नत्वनुवाद इति भाट्टप्रभाकरमतसिद्धान्तस्समान एव ।

—:o:—

---

1. मी. द. (2-1-1)

## पशुसोमापूर्वताधिकरणम्

(२-२-६)

द्रव्यं सयोगाच्चोदना पशुसोमयो· प्रकरणे द्रव्यसंयोगो-
न हि तस्य गुणार्थेन ।१७। अचोदकाच्च संस्कारा:
।१८। तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं
हि स्याद्भेदो द्रव्यगुणीभावात् ।१९। संस्कारस्तु न
भिद्येत परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ।२०।
इयन्ति सिद्धान्तपराणि सूत्राणि ।

'यजेत' 'आलभति' इत्येतावनुवादौ उत विधी इति संशयः । तत्र 'सोमेन यजेत' इत्यत्र 'ऐन्द्रवायव गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादीनि श्रुतानि । तथैव 'अग्नीषोमीयं पशुमालभेत' इत्यत्र 'हृदयस्याग्रे अवद्यति' अथ जिह्वाया । अथ वक्षस' इत्यादीनि श्रुतानि । तत्र द्रव्यदेवताविशिष्टाना गृह्णादिवाक्यविहितानां अनुवादः 'सोमेन यजेत' इत्यनेन क्रियते । तथैव हृदयादिवाक्याना अनुवादः अग्नीषोमीयवाक्येन क्रियते । तस्मादनुवाद एवेति पूर्वपक्षः ।

'सोमेन यजेत' इत्यनेन विहितस्य अर्थस्य ग्रहणकवाक्येषु अप्रतीतेः, पुरोवादाभावान्नात्रानुवादः । तथैव अग्नीषोमीयेऽपि । अतश्च ग्रहणवाक्यैः देवताविशिष्टः सोमसंस्कारो विधीयते । अवदानवाक्यैश्च पशुसंस्कारः

विधीयते । एवञ्च यजति, आलभति, इत्येतौ वाक्यौ कर्मविधी एवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– यजतिपदेन ग्रहणवाक्यविहिताना यागानामनुवादः । तथैव आलभति पदेन अवदानवाक्यविहितानां यागानामनुवाद-इति सामान्यपूर्वपक्षः । अधिकाशङ्कातु रस लतयोः पशुहृदययोश्च भिन्नत्वात्, तद्द्रव्यकयागयोः तद्विधानं न सम्भवति । 'हृदयस्याग्रे' इत्यत्र क्रमदर्शनात् ऐन्द्रवायववाक्ये समुच्चयदर्शनाच्च आभ्यां वाक्याभ्यां पूर्वयागयो. न द्रव्य विधीयते । ततश्च लक्षणया अनुवाद एवेति पूर्वपक्षः ।

अनुवादे सति लक्षणा, लक्षणायां सत्यामनुवाद इत्यन्योन्याश्रय-दोषो भवति । अतश्च 'सोमेन यजेत' इत्यत्र सोमलताविशिष्टो यागो विधीयते, ऐन्द्रवायवादिवाक्यैश्च संस्कारो विधीयते । एवमेव आलभति स्थलेऽपि । तस्मात् कर्मान्तरमेवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– ग्रहणावदानवाक्यविहिताना यागाना समुदायानुवाद इति सामान्य पूर्वपक्षः भाट्टमते । ग्रहणावदानवाक्याभ्यां सोमयागे पश्वा-लम्भने च द्रव्य न विधीयते । अतश्च अनुवाद इति प्रभाकरमते पूर्वपक्षः । उभयमतेऽपि अनुवादो नास्तीति सिद्धान्तस्समान एव । किन्तु पुरोवादा-भावान्नानुवाद इति भाट्टमते । इतरेतराश्रयदोषान्नानुवाद इति प्रभाकर-मते च सिद्धान्त. ।

—:o:—

## संख्याकृतकर्मभेदाधिकरणम्

(२-२-७)

पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ।२१।
इदं सिद्धान्तपर सूत्रम् ।

'तिस्र आहुतीर्जुहोति[1]' इत्यत्र कर्मैक्यमुत कर्मभेदो वेति सशयः । तत्र अभ्यासाभावान्न कर्मभेदः । यथा पञ्चप्रयाजाना आवृत्त्या एकादशत्व सम्पद्यते, तथैव त्रित्वसंख्यापि आवृत्त्या नेतव्येति पूर्वपक्षः ।

प्रयाजस्थले पञ्चत्वसख्यायाः सिद्धत्वात् आवृत्तिमन्तरा एकादशत्वं न सम्भवतीति तत्र आवृत्तिरेवेष्यते । अत्र तु पूर्व एकत्वसंख्यावरोधाभावात् नावृत्तिः। अतः कर्मबहुत्वमेवेति वृत्तिकारमतम् ।

इद वृत्तिकारमतं भाष्यकारो नानुमन्यते । यतः कर्मबोधकस्य आहुतिशब्दस्य विशेषणेन त्रिशब्देन कर्मभेदस्य स्फुटतया पूर्वपक्ष एव नोत्थितो भवति । अतश्च 'सप्तदश प्राजापत्यान् पशूनालभेत' इतीद वाक्यमुदाहरणम् । तत्र संख्यया कर्मभेदोऽस्ति नवेति संशयः । 'प्रजापतिर्देवता येषां पशूना ते प्राजापत्याः' इति तद्धितव्युत्पत्त्या पशव एकं द्रव्यं, प्रजापतिर्देवतेति द्रव्यैकत्वात् देवतैक्याच्च कर्मैक्यमेव । 'तिस्र

---

1. J. N. V. P. 86

आहुतीर्जुहोति[1]' इत्यत्र त्रित्वं क्रियागतम् । अत्र सप्तदशसंख्या पशुगता । अतः कर्मैक्यमेवेति पूर्वपक्षः । तद्धितव्युत्पत्तिस्तु प्रजापतिर्देवता यस्य पशोः सः प्राजापत्यः, तान् प्राजापत्यानिति । तथा च प्रजापतिः देवता, एकः पशुः द्रव्यमिति यागरूपं ज्ञायते । अतश्च बहुवचनस्य पर्यवसानं तु सप्तदश इति संख्यया सप्तदश यागा इति ज्ञायते । तस्मात्कर्मभेद एवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– 'प्राजापत्यान्' इति तद्धितान्ते यदि सप्तदश संख्या निविशते तदा प्राजापत्यास्सप्तदश इति ज्ञायते, न तु सप्तदश-प्राजापत्या इति । अतश्च 'प्रधानार्थं एव किं भिन्नस्सन् उपसर्जनेन युक्तः, उत सोपसर्जनो भिन्नः[2]' इति सशयः । तत्र भिन्नस्य पशोः उपसर्जनेन द्रव्यदेवतासम्बन्धेन योगो युक्तः । ततः एकस्मिन् यागे बहवः पशवो भवन्ति । अतो न कर्मभेद इति पूर्वपक्षः । पशुयागः एकादशभिरव-दानैरेव सिद्धयति । स च एकादशावदानगणः एकस्मादेव पशोस्सिद्धयति । तत्र पश्वन्तरस्य अपेक्षैव नास्ति । तथा च एकेन पशुना एकस्य यागस्य सिद्धत्वात् तत्र बहवः पशवो निवेष्टुमयोग्या भवन्ति । तथा च बहुत्वा-नुपपत्तिः । किञ्च आवृत्तिरपि नास्ति । हविर्भेदे हविस्संस्कार भेदे वा आवृत्तिर्भवति । अतश्च पशूनामुपसर्जनत्वात् तत्सम्बन्धावगतिरेव भिन्ना अवगम्यते । न हविर्मात्रम् । अतोऽत्र यागभेदः प्रयोजनमिति प्रभा-करमतेन सिद्धान्तः ।

**मतभेदः** :– 'तिस्र आहुतीर्जुहोति' इति वृत्तिकारोदाहरण न समुचितमिति अन्यदुदाहरणं भाष्यकारेण दत्तम् । तदनुसृत्यैव भाट्टप्रभा-

---

1. J. N. V P. 86

2 बृहती P. 484

करयोर्मतभेदो दीयते। द्रव्यैक्याद्देवतैक्याच्च कर्मैक्यमेवेति पूर्वपक्षः। प्राजापत्यानिति तद्धितान्तबहुवचनेन बहूनां यागानां विवक्षायां सप्तदशेति संख्यावशात्कर्मभेदसिद्धिर्भाट्टमते। प्रभाकरमते विचारफलं कर्मभेदतेति विषयविशेषता दृश्यते।

—:o:—

## संज्ञाकृतकर्मभेदाधिकरणम्

(२-२-८)

संज्ञा चोत्पत्तिसंयोगात् ।२२।
इदं पूर्वपक्षपरं सूत्रम्।

'अथैष ज्योतिः' इत्यत्र गुणः कर्म वेति संशयः। तत्र 'अथैष ज्योतिः अथैष विश्वज्योतिः, अथैष सर्वज्योतिः, अनेन सहस्रदक्षिणेन यजेत[1]' इत्यत्र 'एष ज्योतिः' इत्यनेन प्रकृतं ज्योतिष्ठोममनूद्य तदुद्देशेन सहस्रदक्षिणारूपो गुणो विधीयते इति पूर्वपक्षः। अथ इत्यनेन ज्योतिष्ठोमस्य विच्छेदो दृश्यते। तथा च अनुवादस्य असम्भवान्न तदुद्देशेन गुणो विधीयते। एतच्छब्दस्य अतीतसन्निहितवाचित्ववदेव आगामिसन्निहितवाचित्वमप्यस्ति। तथा च ज्योतिश्शब्दः अतीतमपरामृशन् किञ्चिन्नूतनं कर्माभिदत्ते। तस्मात्संज्ञया कर्म भेदस्सिद्धयति। एवमेव विश्वज्योत्यादिस्थलेऽपीति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :– 'अथैष ज्योतिः इत्युपक्रमस्थ' य एवं विद्वनेतेन यजेते'

---

1. J. N V. P. 87

स्यनेन उपसहारदर्शनात् भावार्थसामानाधिकरण्यमस्ति। अतश्च नामधेयमुपपन्नं भवति। तस्मात् दर्शपूर्णमासवत् साकंप्रस्थाय्यवद्वा नामधेयमेव, न तु यागभेद इति पूर्वपक्षः। नात्र नामधेयं, संज्ञयैव कर्मभेदसिद्धेः। तस्मात् सहस्रदक्षिणादिविशेषविशिष्टः प्रकृतादन्य एव यागो विधीयते। अतश्च कर्मान्तरमेवेति सिद्धान्तः प्रभाकरमतेन।

**मतभेदः** :– प्रकृतज्योतिष्ठोममनूद्य तदुद्देशेन गुणो विधीयते इति भाट्टमते पूर्वपक्षः। भावार्थसामानाधिकरण्यान्नामधेयमिति प्रभाकरमते पूर्वपक्षः। संज्ञयैव भेदसिद्धिरिति उभयमतसिद्धान्तः।

---

## देवताभेदकृतकर्मभेदाधिकरणम्

(२–२–९)

गुणश्चापूर्वसंयोगे वाक्ययोस्समत्वात् ।२३।
इदं सिद्धान्तपरं सूत्रम्।

'वाजिभ्यो वाजिनम्' इति गुणः कर्मान्तर वेति सशयः। तत्र 'तप्ते पयसि दध्यानयति, 'सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इत्यत्र आमिक्षाद्रव्यभाजो देवाः वाजिभ्य इत्यनेनानूद्य तदुद्दिश्य वाजिरूपो गुणो विधीयते। ततश्च आमिक्षाद्रव्यस्य वाजिनद्रव्येण समुच्चयः विकल्पो वेति पूर्वपक्षः। वैश्वदेवयागः आमिक्षाद्रव्यावरुद्धः। एकद्रव्यावरुद्धे द्रव्यान्तरनिवेशासम्भवात् वाजिनद्रव्यं वाजिशब्दार्थस्य देवतान्तरं कल्पयति। अतो देवतान्तरवशात्कर्मान्तरमेवेति भाट्टमतेन सिद्धान्तः। घनीभूत पयः पिण्डः आमिक्षा। जल वाजिनम्।

**प्रभाकरमतम् :–**

विश्वेदेवतासम्बन्धः हविर्द्रव्यस्य अस्तीति ज्ञायते । अतश्च हविर्द्रव्यविशिष्टं एक कर्मेति पूर्वपक्षः। आमिक्षायागे उपसर्जनभूतायाः विश्वेदेवदेवतायाः नान्योपसर्जनत्वं सम्भवति । विश्वेदेवाना आमिक्षा-सम्बन्धः श्रुत्युक्त । वाजिनसम्बन्धस्तु वाचनिकः । अतः सम्बन्ध-भेदादेव भेद इति प्रभाकरमतेन सिद्धान्त. ।

**मतभेदः :–**

देवाननूद्य आमिक्षायागे वाजिनगुणो विधीयत इति भाट्टमते पूर्वपक्षः । उभयविशिष्ट एकं कर्मेति प्रभाकरमते पूर्वपक्षः । कर्मभेदः अस्त्येवेति सिद्धान्तः । तत्र देवतान्तरस्य सत्त्वात् कर्मभेद इति भाट्टमते। सम्बन्धभेदादेव भेद इति प्रभाकरमते ।

---

## द्रव्यविशेषानुवित्तकृतकर्मैक्याधिकरणम्

(२–२–१०)

अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ।२४।
इद सिद्धान्तपरं सूत्रम् ।

दर्विहोमे कर्मान्यत्वमुत गुणो वेति संशयः । तत्र 'अग्निहोत्रं जुहोति' इत्यस्मात्प्रकृतात्कर्मणः, 'दध्ना जुहोति' इत्यनेन अन्यद्दधिहोमं कर्मैव विधीयते पूर्वाधिकरणन्यायेनेति पूर्वपक्षः ।

यथा वैश्वदेवयागः आमिक्षाद्रव्यावरुद्धः, तथा अग्निहोत्रहोमः न.

द्रव्यावरुद्धः प्रत्युत गुणमाकांक्षति । तस्मात् 'दध्ना जुहोति' इत्यनेन दधिरूपो गुणो विधीयते । अत· गुणविधिरेवात्र । एवमेव 'पयसा जुहोति' इत्यनेनापि गुणो दधिवदेव विधीयते । अतश्च उत्पन्नशिष्टानां दधिपयआदीनां समबलत्वात् विकल्प इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– 'अन्योपर्जनं अन्येन नान्वेति' इति न्यायात् प्रधानस्यापि होमस्य एकद्रव्येण उपसर्जनेन सम्बद्धस्य अन्योपपर्जनं न सम्भवतीति कर्मभेद इति पूर्वपक्षः । सर्वानुसम्बन्धितया अग्निहोत्रवाक्यं वर्तते । अतः दधिपयआदीना विकल्प इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– कर्मभेद एवेति उभयमत पूर्वपक्षः । कर्मभेदो नास्ति । किन्तु दधिपयआदीना विकल्प इति सिद्धान्तोऽपि समान एव ।।

—:o·—

## दध्यादिद्रव्यसफलत्वाधिकरणम्

(२–२–११)

फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ।२५।
अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ।२६।

अत्र प्रथम पूर्वपक्षपरं सूत्रं, द्वितीयं सिद्धान्तपरम् ।

'दध्नेन्द्रियकामस्य जुहुयात्' इति कर्म, गुणो वेति संशयः । तत्र प्रकृतादग्निहोत्रादन्यत्कर्मवात्र विधीयते । इन्द्रियरूपस्य फलस्य धात्वर्थमन्तरा द्रव्यमात्रान्न निष्पत्तिर्भवति । अतः कर्मान्तरमेवेति पूर्वपक्षः । मत्वर्थलक्षणाभयान्नात्र कर्म विधीयते । गुणविशिष्ट याग-

विधाने गौरवप्रसङ्गः। अतः 'दध्ना जुहोति' इत्यनेन प्राप्तस्य दधिगुणस्य अनेन वाक्येन फलसम्बन्धो विधीयते इति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :— दधिसाध्यहोमादेव फल भवति, न तु गुणादेव। अतश्च इन्द्रियरूप फलं प्रति होमस्य साधनत्वेनान्वयः। एवञ्च विहित-विधानायोगात् विशिष्टं कर्मान्तरमेव। फलाय गुणविधाने वाक्यभेदः। अतः कर्मभेदः अस्त्येवेति पूर्वपक्षः। अगतौ मत्वर्थलक्षणा विधिगौवादयोऽङ्गीकर्तव्याः। अत्र तु दधिविभक्तरूपस्य प्रकृतकर्मणः फलाय विधानात् तदर्थं दध्युपादानसम्भवात् फलाय गुणविधिरेवात्रेति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :— धात्वर्थमन्तरेण फलानुत्पत्तेः अन्यत्कर्मैवेति उभयमत-पूर्वपक्षः। फलाय गुणविधिरिति सिद्धान्तपक्षश्च समान एव।

—.o:—

## वारवन्तीयादीनां कर्मान्तरताधिकरणम्

(२–२–१२)

**समेषु कर्म युक्तं स्यात् ।२७। इदं सिद्धान्तपरं सूत्रम्।**

'त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वृक्ष्वेकविंशमग्निष्टोम साम कृत्वा ब्रह्मवर्चसकामो यजेत' इत्यस्य सन्निधावेव श्रूयते। 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम सामकृत्वा पशुकामो ह्येतेन यजेत'[1] इत्यत्र

---

1. J. N. V. P. 90

रेवत्यादि गुणः, कर्म वेति संशयः । तत्र पूर्वाधिकरणवदेव अत्रापि रेवतीनां ऋचां वारवन्तीयनामकेन साम्ना यस्सम्बन्धः, सोऽयं पशुफलाय अग्निष्टुति विधीयते । अतश्च रेवत्यादिः गुण एवेति पूर्वपक्षः ।

पूर्वाधिकरणदृष्टान्तवैषम्यमत्र वर्तते । दध्नो होमजनकत्व लोकतोऽवगन्तु शक्यते । फलसम्बन्ध एक एव बोध्यः । अतो न वाक्यभेदस्तत्र । एवञ्च रेवतीऋगधिकरणकवारवन्तीयसाम्नः अग्निष्टुत्कर्मसाधनत्वं फलसाधनत्वञ्चेत्युभयं च शास्त्रबोध्यं भवति । तेन वाक्यभेदो दुर्वार इति रेवत्यादिगुणविशिष्ट कर्मान्तरमेवात्र विधीयते इति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– भाट्टमतपूर्वपक्ष एवात्रापि फलाय गुणविधिरिति पूर्वपक्षः । पूर्ववाक्ये प्रकृत अग्निष्टोमसामरूपकार्य वायव्यानुबन्धम् । रेवतीवाक्ये तु रेवत्याधारं वारवन्तीयमनुबन्धः । अतः तयोरनुबन्धभेदात् पृथक्कर्मैवेति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :– फलाय गुणविधिरिति पूर्वपक्षस्तु समान एव । वाक्यभेदस्य दुर्वारत्वाद्गुणविशिष्ट कर्मान्तरमिति भाट्टमते सिद्धान्तः । अनुबन्धभेदात्कर्मभेद इति प्राभाकरसिद्धान्तः ।

———

## सौभरनिधनयोः कर्मैक्याधिकरणम्

(२-२-१३)

सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ।२८।
इदं पूर्वपक्षपरं सूत्रम् ।

सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यात्,
निधनार्था पुनः श्रुतिः ।२९। इद सिद्धान्तपरं सूत्रम् ।

'यो वृष्टिकामो यो अन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरे' इति समाम्नाय पुनः, समाम्नात 'हीषिति वृष्टिकामाय निधन कुर्यात्' ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय[1] इत्यत्र हीषादीना वृष्ट्यादिः फलान्तरं उत सौभरे हीषादीनां नियमो वेति संशयः । तत्र सौभरफलेभ्यः वृष्ट्यादिभ्यः अन्यानि फलानि जनयितु हीषादिविशेषाः निधने विधीयन्ते । अतः सौभरस्य हीषिति निधनविशेषस्य च इति द्वे वृष्टी भवतः । तस्माद्वृष्टिद्वयमेलने महती वृष्टिरिति पूर्वपक्षः ।

सौभरस्य फलभूता ये वृष्ट्यादयः, त एव हीषादिवाक्येषु अनूद्यन्ते । यतः सौभरवाक्ये यः वृष्ट्यादिकामः स एवेति हीषादिविधौ

1. J. N. V. P. 91

प्रत्यभिज्ञायते । फलत्रयकामानां अनियमेन प्राप्तौ हीषादिषु मध्ये यस्य कस्यचिदपि प्राप्तौ विधेर्नियमार्थत्वात् । अतः सौभरे हीषादीनां नियम्यमानत्वात् वृष्ट्यादिफलमेकमेवेति भाट्टमतेन सिद्धान्तः

**प्रभाकरमतम्** :– प्रथममेकं वृष्ट्यादिफलं सिद्धम् । निधनाश्रित हीषादि च वृष्ट्यन्तरफलकमिति पूर्वपक्षः । 'हीषिति वृष्टिकामाय निधनं कुर्यात्' इत्यत्र वृष्टिकामशब्देन सौभरसम्बन्धिवृष्टिकामस्य प्रत्यभिज्ञायमानत्वात्तस्यैव हीषिति विधीयते । तस्मादत्र व्यवस्थार्थं श्रवणमेवेति न कर्मान्तरमिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– पूर्वपक्षे कर्मान्तरमेव वृष्ट्यादिफलोद्देशेन विधीयते इति । व्यवस्थार्थमेव तत्र इति सिद्धान्तः । इत्येव भाट्टप्रभाकरमतयोस्समानमेवेदमधिकरणम् ।

सौभरं नाम सामविशेषः । निधनं नाम पञ्चभिः, सप्तभिर्वा भागैरुपेतस्य साम्नोऽन्तिमभागः ।

---

इति

द्वितीयः पादः समाप्तः

## द्वितीयाध्यायद्वितीयपादाधिकरणेषु प्रतिपादिता विषयाः

१. शब्दान्तराद्भेदः प्रथमाधिकरणे निरूपितः ।

२. अभ्यासात्कर्मभेदः द्वितीयाधिकरणे निरूपित. ।

३. विद्वद्वाक्ये कर्मभेदो नास्तीति तृतीयाधिकरणे निरूपितः ।

४. विष्ण्वादिवाक्ये यागविधिरेवेति चतुर्थाधिकरणे निरूपितः ।

५. अग्निहोत्रवाक्ये आधारवाक्ये च कर्मविधिरेवेति पञ्चमाधिकरणे प्रतिपादितः ।

६. 'सोमेन यजेत' 'पशुमालभेत' इत्यत्र 'आलभति' इत्येते वाक्ये कर्मविधी इति षष्ठधिकरणे निरूपितम् ।

७. सख्यायाः कर्मभेदबोधकत्वं सप्तमाधिकरणे निरूपितम् ।

८. संज्ञया कर्मभेदः अष्टमाधिकरणे निरूपितः ।

९. देवताभेदकृतकर्मभेदः नवमाधिकरणे निरूपित. ।

१०. दधिपयसोर्विकल्प इति दशमाधिकरणे निरूपितः ।

११. फलाय गुणविधिरिति एकादशाधिकरणे निरूपितम् ।

१२. वारवन्तीयादीनां कर्मान्तरत्वं द्वादशाधिकरणे निरूपितम् ।

१३. सौभरनिधनयोः कर्मैक्यं त्रयोदशाधिकरणे निरूपितम् ।

# अथ द्वितीयाध्याये तृतीयः पादः

## ग्रहाग्रताया ज्योतिष्टोमाङ्गताधिकरणम्

(२-३-१)

गुणस्तु क्रतुसयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्य अशेष-
भूतत्वात् ।१। इदं पूर्वपक्षपरं सूत्रम् ।

एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैक्यत्वं गुणवाक्य-
त्वात् ।२। इदं सिद्धान्तपरं सूत्रम् ।

ऐन्द्रवायवादिगुणोपेतानि कर्मान्तराणि उत गुणविधायकानि वेति संशयः। तत्र 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्[1]' इति। तत्र सोमशब्देन सोमयाग उच्यते। तस्मिंश्च यागे मध्यन्दिने सवने पृष्ठस्तोत्रे, रथन्तरबृहज्जगन्नामकानि विकल्पेन विहितानि। ऐन्द्रवायवमैत्रावरुणाश्विनेत्यादिग्रहाः प्रातः सवनेऽपि वर्तन्ते। दारुपात्रेषु सोमरसस्य ग्रहणात् ग्रहाः भवन्ति। सोमयागस्य रथन्तरसामोपेतत्वपक्षे ऐन्द्रवायवः प्रथमम्, बृहत्सामोपेतत्वपक्षे शुक्रः, जगत्सामोपेतत्वपक्षे

---

1. J. N. V. P. 92

आग्रयण इति विषयवाक्यार्थः। तत्र प्रकृतिज्योतिष्टोमे गायत्र्यादि-सामानि वर्तन्ते। तद्व्यावृत्त्यर्थमिह रथन्तरादयो गुणा। अतः ऐन्द्र-वायवादि गुणोपेतानि कर्मान्तराणि विधीयन्ते इति पूर्वपक्षः।

ज्योतिष्टोमे माध्यन्दिने सवने रथन्तरसाम भवति, प्रातस्सवने गायत्रीसाम भवति। अत. अविरोधान्न गायत्र्यादीनामावृत्तिः। तथा च रथन्तरबृहज्जगतां विकल्पः। तस्माद्गुणविधिरिति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :– यदियच्छब्दश्रवणादुपसर्जनपरमिदमभिधानमुत अभिधानसामर्थ्यात्क्रत्वन्तराभिधान वेति संशये क्रत्वन्तराभिधानपरमेवा-भिधानम्। यतः अभिधानसामर्थ्यस्यान्तरङ्गत्वात्, बहिरङ्गकार्यस्य अन्तरङ्गाद्दुर्बलत्वाच्च कर्मान्तरमेव। तथा च यदि शब्दार्थस्य अविव-क्षेति पूर्वपक्षः। अभिधानविरोधे एव यदिशब्दार्थविवक्षा। नात्रा-भिधानविरोधः। उपसर्जनार्थे हि निमित्ततया परिगृह्यमाणे क्रतोरेवा-भिधानम्। अतः क्रतोरेव निमित्तत्वम् न तु तदनुबन्धस्येति प्रभाकर-मतेन सिद्धान्तः।

**मतभेदः** :– कर्मान्तरमेवेति पूर्वपक्षः। तत्र प्रकृतज्योतिष्टोम-गतगुणव्यावृत्त्यर्थं एन्द्रवायवादिगुणोपेतानि कर्मान्तराणीति भाट्टमते। अभिधानविरोधात् कर्मान्तरमिति प्रभाकरमते। कर्मान्तर न भवतीति सिद्धान्तः। तत्र ग्रहाणा विरोधाभावद्गुणो विधीयते इति भाट्टमतम्। अभिधान विरोधाभावान्न कर्मान्तरमिति प्रभाकरमतम्।

—:o:—

## अवेष्टेः क्रत्वन्तरताधिकरणम्

(२-३-२)

अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ।३।

इदं पूर्वपक्षपरं सूत्रम् ।

अवेष्टौ विप्रादेरनुवादः कर्मान्तरं वेति संशयः । राजसूये पञ्च-हविष्का काचिदिष्टिः श्रूयते । 'आग्नेयमष्टाकपालं निर्वपेत् हिरण्यं दक्षिणा' ऐन्द्रमेकादशकपाल ऋषभो दक्षिणा । वैश्वदेव चरुम्, पिशङ्गी प्रष्टौही दक्षिणा । मैत्रावरुणीमामिक्षा, वशा दक्षिणा । बार्हस्पत्यं चरुम्, शितिपृष्टो दक्षिणा[1] । तत्र 'यदि ब्राह्मणो यजेत बर्हास्पत्यं मध्ये निधाय आहुतिं हुत्वा तमभिघारयेत् । यदि राजन्यः ऐन्द्रम् । यदि वैश्यः वैश्वदेवम्' इति श्रूयते । एवञ्च पञ्चमस्थाने प्राप्तस्य तृतीयस्थाने निवेशः ब्राह्मणकर्तृकत्वपक्षे । द्वितीयस्थाने प्राप्तस्य तृतीयस्थाने निवेशः राजन्यपक्षे । तथा च यदि ब्राह्मणः, यदि राजन्य इत्यनयोरनुवादः । वैश्वदेवस्य स्वत एव तृतीयस्थाने प्राप्तत्वात् विधे-र्नित्यानुवाद । एवञ्च क्रमप्राप्तहविषा वाक्यत्रयो दृश्यते । तथा च ब्राह्मणवैश्ययोरपि प्रजापरिपालनकर्तृत्व सम्भवेन राजशब्दवाच्यत्वादनु-वाद एवेति पूर्वपक्षः ।

राजशब्दस्य क्षत्रियजातौ रूढत्वात् ब्राह्मणवैश्ययोर्नानुवादः ।

---

1. J. N. V. P. 95

राजसूयान्तर्गतावेष्टौ राजकर्तृकत्वस्यैव सिद्धत्वात् । तत्र ब्राह्मणवैश्य कर्तृकत्वं न सम्भवति । अतश्च राजसूयाद्बहिरवेष्टेस्संभवात् तत्रैव ब्राह्मण वैश्यकर्तृकत्वम् । तस्मात्कर्मान्तरमेवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– ब्राह्मणवैश्यशब्दश्रवणं निमित्तार्थमुत कर्मान्तरार्थं वेति संशयः । अर्थप्रसिद्धिस्तु राज्ययोगात् राजा इति वर्तते । तथा च ब्राह्मणवैश्ययोरपि राज्ययोगस्य सम्भवात् त्रयाणामपि कर्तृत्वप्राप्तेः ब्राह्मणादिश्रवणं निमित्तार्थमिति पूर्वपक्षः । व्याकरणस्मृतौ राज्ञः कर्म-राज्यं इति व्युत्पत्तिः श्रूयते । व्युत्पत्तौ च व्याकरणस्य प्रामाण्य अस्ति । ततश्च राजशब्दस्य क्षत्रियमात्रवाचकत्वात् राजसूयान्तर्गतराजकर्तृकावेष्टौ ब्राह्मणवैश्ययोः कर्तृत्व नास्ति । तथा च प्रापकवचनानामेषां कथं सार्थक्यमिति चेत्–त्रत्वान्तरत्वेनेति प्रभाकरसिद्धान्तः ।

मतभेदः :– राजशब्दव्यवहारस्य ब्राह्मणवैश्ययोरपि सम्भवात् ब्राह्मणवैश्ययोरनुवाद इति भाट्टमते पूर्वपक्षः । निमित्तार्थ श्रवणमिति प्रभाकरमते पूर्वपक्षः । राजशब्दस्य क्षत्रियमात्रवाचकत्वात् कर्मान्तरमेवेति उभयमतसिद्धान्तः ।

——

## आधानस्य विधेयत्वाधिकरणम्

(२–३–३)

आधाने सर्वशेषत्वात् ।४। इदं सिद्धान्तपरं सूत्रम् ।

'वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यः । शरदि वैश्यः,'

इति श्रूयते । तथैव 'वसन्ते ब्राह्मणमुपनयीत । ग्रीष्मे राजन्यं । शरदि वैश्यं'[1] इति च । तत्र ब्राह्मणादयः अनूद्यन्ते न वेति संशयः । ऋत्वनुष्ठानान्यथानुपपत्त्या ब्राह्मणादयः क्लुप्ता एव । आधानमन्तरा अग्निर्न सम्भवति । अनुष्ठानमन्तरा आधान न सम्भवति । विद्यामन्तरा अनुष्ठानं न सम्भवति । उपनयनपूर्वकाध्ययनमन्तरा विद्या न सम्भवति । अतश्च ब्राह्मणादीनां उपनयनकल्पनं भवत्येवेति पूर्वपक्षः ।

उपनयनाधानयोरकल्पने लौकिकाग्नौ होतु शक्यते । पुस्तकपाठेन च विद्यामधिगन्तुं शक्यते । तस्माद्वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने विधीयेते इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– आधानमन्तरा अग्नेस्सम्भवात् आधानस्य अर्थप्राप्तिरस्त्येव । तथा च 'य एव विद्वानग्निमाधत्ते' इत्यत्र यदाधानं तत्पूर्वस्मात् भिन्नं न वेति संशयः । तत्र अभिन्नमिति पूर्वपक्षेराशयः ।

तथा च सर्वेषामधिकारप्रसक्तौ ब्राह्मणादिनिमित्ते कालविधिरिति पूर्वपक्षः । आहवनीयाद्यग्नीनामलौकिकत्वात् आधानस्यार्थप्राप्तिता नास्ति । शूद्रादीनामाधाननिवृत्त्यर्थ तत्तत्कालकर्तृविशिष्ट आधानान्तरमेव विधीयते इति प्रभाकरसिद्धान्तः ।

**मतभेदः** :– कालविशेषविधानाय ब्राह्मणादयोऽनूद्यन्ते । इति भाट्टमते पूर्वपक्षः । अर्थप्राप्तमाधानं विद्वद्वाक्यविहिताधानाभिन्नमिति प्रभाकरमते पूर्वपक्षः । कालविधिरेव नास्ति, किन्तु तत्तत्कालकर्तृविशिष्टमाधानान्तरमेवेति उभयमत सिद्धान्तः ।

——

1. J. N. V. P. 95

## दाक्षायणादीनां गुणताधिकरणम्

(२-३-४)

अयनेषु चोदनान्तरं संज्ञोपबन्धात् ।५। अगुणाच्च कर्म-चोदना ।६। समाप्तं च फले वाक्यम् ।७। इयन्ति पूर्वपक्षसूत्राणि ।

विकारो वा प्रकरणात् ।८। लिङ्गदर्शनाच्च ।९। गुणात्संज्ञोपबन्धः ।१०। समाप्तिरवशिष्टा ।११। इयन्ति सिद्धान्तपराणि सूत्राणि ।

'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इत्यत्र कर्मान्तरं, गुणो वेति संशयः । तत्र दाक्षायणशब्दस्य लोकप्रसिद्धार्थाभावात् उद्भिदादिवद्यजि सामानाधिकरण्याच्च नामधेयत्वेन कर्मनामविधिरेवेति पूर्वपक्षः । दक्षस्य यजमानस्य इमे दाक्षाः, तेषामयनमिति अयनस्य आवृत्तिः । तथा च दाक्षायणशब्दनिर्वचनात् अर्थस्फुरण भवत्येव । अतः प्रकृतदर्शपूर्णमासा-त्मकयज्ञः दाक्षायणयज्ञः । आवृत्तिस्तु 'द्वे पौर्णमास्यौ यजेत' 'द्वे अमावास्ये' इति वाक्यशेषादवगम्यते । तस्मात् स्वर्गफलाय दर्शपूर्णमासयोः आवृत्त्या-ख्यो गुणोऽनेन विधीयते इति भाट्टमतेन सिद्धान्तः । तद्वदेव 'साकं प्रस्थाय्येन यजेत' इत्यनेन दर्शयागे साकं प्रस्थाय्याख्यो गुणो विधीयते इति ।

प्रभाकरमतम् :— दाक्षायणयज्ञः संज्ञाभेदात् दर्शपूर्णमास भिन्न

इति पूर्वपक्ष. । यत्र सञ्ज्ञायाः भेदापादकं गुणान्तरं भवति तत्रैव संज्ञाकृतकर्मभेदः । अत्र तु गुणान्तराभावात् दाक्षायणसंज्ञायाः भेदनिर्वाहकत्वं नास्ति । अतः प्रकृतकर्मणः नामधेयमिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– कर्मनामत्वेन कर्मान्तरमिति भाट्टमते पूर्वपक्ष । संज्ञाभेदादेव कर्मान्तरमिति प्रभाकरमते पूर्वपक्षः । शब्दस्य निर्वचनसम्भवेन, आवृत्तिरूपो गुणः प्रकृतयागोद्देशेन विधीयत इति भाट्टमतम् । प्रकृतयागस्यैव नामधेयमिति प्रभाकरमते सिद्धान्तः ।

---

## द्रव्यदेवतायुक्तानां यागान्तरताधिकरणम्

(२–२–५)

संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ।१२।
इदं सिद्धान्तपरं सूत्रम् ।

यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ।१३।
यजतिस्तु द्रव्यफलभोक्तसंयोगादेतेषां
कर्मसम्बन्धात् ।१४। लिङ्गदर्शनाच्च ।१५।
इयन्ति पूर्वपक्षपराणि सूत्राणि ।

'वायव्यं श्वेतमालभेत भूतिकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति अनारभ्य श्रूयते । तथा दर्शपूर्णमासयोः 'ईषामालभेत' 'चतुरो मुष्टीन्निर्वपति' इति च श्रूयते । तमेत ईषालम्भमनूद्य अनारभ्यवाक्येन श्वेतगुणो विधीयते । तच्च वायुस्पर्शसम्बन्धाद्वायव्यं भवति । तद्वदेव चतुर्मुष्टिनिर्वापोद्देशेन चरुर्गुणत्वेन विधीयते । निरुप्तस्य हविषः

आग्नेयतया सूर्यवत्प्रभासम्बन्धात्सौर्यत्वम् । भूतिब्रह्मवर्चसे च फले स्वर्गकामिकयोः दर्शपूर्णमासयोः पूर्वसिद्धे एवानूद्येते । एवञ्च गुणविधी एवेति पूर्वपक्षः ।

फलपदयोः नित्यतया श्रुतत्वादनुवादत्वम् । तेन च आनर्थक्यं न युक्तम् । तस्माद्गुणफलविशिष्टकर्मान्तरे विधीयेते इति द्वितीयः पूर्वपक्षः ।

श्वेतपशुः चरुद्रव्यं चास्ति । वायुसूर्यदेवतयोरपि प्रतीतिः अस्ति । तथा च स्वत एव यागस्वरूपस्य सिद्धत्वात् यागविधिरेवात्र । न तु गुणविधिः । तथा च 'भूतिकामो वायव्येन श्वेतेन पशुना यजेत' ब्रह्म-वर्चसकामः सौर्येण चरुणा यजेत' इत्येवंविधः अर्थसिद्धः विधिः । आल-म्भनिर्वापयोरनुवाद एव । तस्माद्यागविधिरेवेति भाट्टमतसिद्धान्तः ।

**प्रभाकरमतम्** :– वायव्यं श्वेतमालभेत इत्यस्मिन् वाक्ये परस्पर-स्वरूपानन्वितमेव पदार्थजातं लक्ष्यते । अतश्च द्रव्यदेवतापदसम्बन्ध–निरपेक्षस्य विधानम्, अथवा अनुवादो वेति प्रथमपूर्वपक्षः । अरुणा–न्यायवदेव परस्परासङ्गतेः वाक्यान्तरमिति मन्यते । अथवा ब्रह्मवर्चस-कामपदान्वयोऽपि लभ्यत एवेति द्वितीयः पक्षः । यदा समस्तपदान्वयो न सम्भवति तदा असौ वाक्यान्तर सम्भवति । अत्र तु द्रव्यदेवतासम्बन्धेन यागानुमानाद्यागविधिरस्त्येवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– श्वेतचर्वोर्विधानात् गुणविधिरिति प्रथमपूर्वपक्षः । उभयमते । गुणविशिष्टकर्मान्तरमिति भाट्टमते द्वितीयः पूर्वपक्षः । वाक्यान्तरमेवेति प्रभाकरमते द्वितीयपूर्वपक्षः । यागविधिरेवेति उभय-मतसिद्धान्तः । इति ।

—:o:—

## वत्सालम्भादीनां संस्कारताधिकरणम्

(२-३-६)

विशये प्रायदर्शनात् ।१६। अर्थवादोपपत्तेश्च ।१७।
इमे द्वेऽपि सिद्धान्तपरे एव सूत्रे ।।

वत्सालम्भः यजिः उत स्पर्शो वेति संशयः। अग्निहोत्रहोमाधिकरणे 'वत्समालभेत' इति श्रूयते। तत्र वत्सालम्भः वायव्यावदेव यजिरिति पूर्वपक्षः।

वायव्यावाक्ये देवता अस्ति। अत्र तु देवताया अभावाद्वैषम्यमस्तीति अत्र स्पर्श एव विधीयत इति भाट्टमतसिद्धान्तः। अयं च स्पर्शः अग्निहोत्राङ्गसंस्कारक इति।

**प्रभाकरमतम्** :– आलभतिसामान्यात् यजिमता भवितव्यमिति पूर्वपक्षः। यजिमत्वे देवतासम्बन्धस्यैव प्रयोजकता। अतश्च देवताया अभावान्न यजिमता। तस्मात् स्पर्श एव विधीयत इति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– वत्सालम्भः यजिरिति पूर्वपक्षः। देवताया अभावत् स्पर्श एव विधीयत इति सिद्धान्त। एवञ्च भाट्टप्रभाकरमते पूर्वोत्तरपक्षौ समावेव ।।

—

## नैवारचरोराधानार्थताधिकरणम्

(२-३-७)

संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ।१८।
इद पूर्वपक्षपरं सूत्रम् ।

'नैवारश्चरुर्भवति' 'चरुमुपदधाति' इति च अग्नौ श्रूयते । तत्र यागो विधीयते उत उपधानमात्र वेति सशयः । तत्र नीवारचरुद्रव्यकयागो विधीयते । ततश्च देवताप्राप्तिस्तु 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति वाक्यशेषादवगम्यते । उपधानं च चरुप्रतिपत्त्यर्थं इति पूर्वपक्षः ।

यागविधानानन्तर देवताप्राप्तिरुत देवताप्राप्त्यनन्तर यागविधिर्वेति अन्योन्याश्रयात् न यागविधिः । अत उपधानमेव विधीयते इति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– 'चरुमुपदधाति' इत्यत्र 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इत्यार्थवादिकदेवतासम्बन्धाद्यजिमत्येवेयं चोदना इति पूर्वपक्षः । विशेषाकांक्षायामेव अर्थवादाद्देवताया निर्णयः । अत्र तु द्रव्यस्तुतिपरैव श्रुतिरिति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :– अर्थवादसम्बन्धेन देवतायाः प्राप्तत्वाद्यागसिद्धिरिति पूर्वपक्षः उभयमते । अन्योन्याश्रयदर्शनात् उपधानमेव विधीयते इति

भाट्टमतेन सिद्धान्तः। श्रुत्या द्रव्यस्तुतिरेव भवतीति नात्र यागो विधीयते इति प्रभाकरमतेन सिद्धान्तः।

—:o:—

## पात्नीवतस्य पर्यग्निकरणगुणत्वाधिकरणम्

(२-३-८)

पात्नीवते तु पूर्ववत्त्वादवच्छेदः ।१६।
इद सिद्धान्तपरं सूत्रम्।

'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्यत्र किं यागो विधीयते उत गुणो वेति सशयः। इदं वाक्य 'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकरणेऽस्ति। तत्र पर्यग्निकृतशब्देन संस्कृतपशुद्रव्यमुच्यते। पात्नीवतशब्देन पात्नीवन्नामकदेवतासम्बन्धः प्रतीयते। तथा च द्रव्यदेवतासम्बन्धस्य प्रतीयमानत्वाद्यागविधिरेवात्र। एवञ्च द्वयोरन्वयोऽपि भवति। अतश्च वायव्यावद्यागविधिरिति पूर्वपक्षः।

नात्र यागविधिः। किन्तु गुणविधिरेव। नात्र वायव्यान्यायः। तस्य अनारभ्याधीतत्वात्प्रकृतप्रत्यभिज्ञा नास्ति। इह तु पात्नीवच्छब्देन प्रकृतः पशुः आलभ्यत्वेन प्रतीयते। (प्रत्यभिज्ञायते)। तमनूद्य पर्यग्नितकृशब्दान्वितेन 'उत्सृजन्ति' इत्याख्यातेन पर्यग्निकरणाख्यो गुणो विधीयते। प्रकृतिगतपर्यग्निकरणस्य विकृतौ चोदकेन प्राप्तत्वात् पुनर्विधान व्यर्थमिति न वाच्यम्। यतः उपरितनाङ्गाननुवृत्तः विधिप्रयोजकत्वात्। नत्वत्र पर्यग्निकरणोत्तराणां अङ्गानामननुष्ठाने परिसंख्यास्ति। किन्तु अर्थादेव उत्तराङ्गाननुष्ठानमिति। एवञ्च पर्यग्निकरणविधौ

'उत्सृजन्ति' इत्याख्यातेन उपरितनाङ्गोत्सर्गाख्यगुणो विधीयत इति भाट्टमते सिद्धान्तः ।

प्रभाकरमतम् :– 'त्वाष्ट्रं पात्नीवतमि'त्यत्र गुणश्रवणात् 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्यनेन यागो विधीयते इति पूर्वपक्षः ।' 'पर्यग्निकृतमित्यत्र' द्वितीयाश्रवणात्तस्यैव उद्देश्यत्वमर्थः । स च यौगिक इति प्रकृतगामी भवति । अतः उत्सर्गाख्यो गुणो विधीयत इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– द्रव्यदेवतासम्बन्धस्य प्रतीयमानत्वाद्यागविधिरिति भाट्टमतेन पूर्वपक्षः । 'त्वाष्ट्रं पात्नीवतमित्यत्र' गुणश्रवणात् 'पर्यग्निकृतमि'त्यादि वाक्ये यागविधिरिति प्रभाकरमते पूर्वपक्षः । प्रकृतं पशुमनूद्य तदुद्देशेन उत्सर्गाख्यो गुणो विधीयते इति भाट्टमतम् । 'पर्यग्निकृतमि'त्यत्र द्वितीयाश्रवणात् तदुद्दिश्य उत्सर्गाख्यो गुणो विधीयते इति प्रभाकरमतम् । पूर्वोत्तरपक्षभेदो नास्ति, किन्तु युक्तिभेद एव ।

—:o:—

## अदाभ्यादीनां ग्रहनामताधिकरणम्

(२–३–९)

अद्रव्यत्वात्तु केवले कर्मशेषः स्यात् ।२०।
इद सिद्धान्तपर सूत्रम् ।

'एष वै हविषा हविर्यजते' योऽदाभ्यं गृहीत्वा सोमाय यजते' इति परावा एतस्याऽयुः प्रण एति, योंशु गृह्णाति इति च अनारभ्य श्रूयते ।

किमत्र अश्वदाभ्यां यागो विधीयते उत गुणो वेति संशयः। तत्र ज्योतिरादिवदेव 'अदाभ्यं' इत्यस्य नामत्वात् तन्नामको यागः 'यजति' इत्याख्यातेन विधीयते। तद्वदेव 'अंशुम्' इत्यत्रापि नामविशेषबलादेव यजतेरभावेऽपि यागो विधीयते। ज्योतिष्टोमविकृतित्वात् न द्रव्यदेवताभावः शङ्कनीयः। तदीयविध्यन्तानिर्देशेन रूपसिद्धेः। अतश्च यागान्तरमेवेति पूर्वपक्षः। यद्यपि अंश्वदाभ्ययोर्नामत्वमुक्तम्। तत्तु ग्रहयोरेव नामत्वम्। न तु यागयो। यतः यजति इति पदस्य गृहीत्वेति पदव्यवधानात्: तस्मात् ग्रहयोरेव विधिः। अतश्च ग्रहणेन ज्योतिष्टोमगतसोमरसे संस्काररूपगुणो विधीयते इति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :– पूर्वोक्त एव सशयः। 'सोमेन यजेत' इत्यत्र यागश्रवणात् निष्प्रयोजनस्य सस्काराभावाच्च यागो विधीयते। अंशुवाक्येऽपि यागविधिरेव। न तु ज्योतिष्टोमानुवाद इति पूर्वपक्षः। सिद्धान्तस्तु भाट्टमतसिद्धान्त सम एव।

मतभेदः :– कर्मनामत्वाद्यागनामधेयमिति भाट्टमते पूर्वपक्षः। यागपदश्रवणात् यागविधिरिति प्रभाकरमते पूर्वपक्षः। सिद्धान्तपक्षस्तु समान एव।

—:o:—

## अग्निचयनस्य संकारताधिकरणम्

(२-३-१०)

अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ।२१।
इदं पूवपक्षपरं सूत्रम् ।

द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ।२२। तत्सयोगा-
त्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ।२३।
इमे सिद्धान्तसूत्र ।

'य एवं विद्वानग्नि चिनुते' इत्येवं विधाय' अथातोऽग्निमग्निष्टो-
मेनानुयजति, तमुक्थ्येन त षोडशिना, तमतिरात्रेण' इत्यादि श्रूयते ।
तस्मिन् वाक्ये यागो विधीयते उत सस्कारो वेति सशयः । अत्र 'अग्नेः
स्त्रोत्रं, 'अग्नेश्शस्त्रम्, इत्यादि क्रतुलिङ्गवशात् अग्निशब्दो यागवाची ।
'अग्नि यजति' इति यागसामानाधिकरण्याच्च यागनामत्वं सिद्धयति ।
तस्मात् 'अग्नि चिनुते', इत्यत्र अग्निनामको याग आख्यातेन विधीयते ।
चिनोतिस्तु 'इष्टकाभिरग्नि चिनुते' इति वाक्यप्राप्तस्यानुवोदक इति
पूर्वपक्षः ।

वह्निद्रव्यमेव अग्निशब्दस्य रूढ्यर्थः, कल्प्यार्थापेक्षया रूढ्यर्थ-
स्यैव लाघवात् । यागरूपाभावाच्च नात्र यागो विधीयते । अतः
चयनेन अग्निचयनेन अग्निसस्कारो भवति । उपयुक्त उपयोक्ष्यमाण वा

संस्कारमर्हति । तस्मात् किमर्थमत्र संस्कार इति चेत्–संस्कृतस्याग्ने: अग्निष्टोमादौ विनियोगो भवति तस्मात्संस्कारविधिरेवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–**

संशयस्तु पूर्वोक्त एव । 'अग्निमनु यजति, इत्यत्र यागसामानाधिकरण्यात् अग्निसञ्ज्ञक याग करोतीत्यर्थः पर्यवस्यति । चिनोतिश्च कार्यं प्राप्त ग्रहणसङ्घातानुवादो वा । 'इष्टकाभिरग्निं चिनुते, इति प्राप्तस्यानुवादो वेति पूर्वपक्षः । अग्नेर्ज्वलने रूढतया संस्कारशब्दश्रवणाच्च संस्कार एव विधीयते । चयनसंस्कृतेऽग्नौ पश्चादनुयजन सम्भवति । तस्मात्संस्कारविधिरेवात्रेति प्रभाकरमतेन सिद्धान्तः ।

अस्मिन्नधिकरणे भाट्टप्राभाकरयोर्मतभेदो नास्ति ।

—:o:—

## मासाग्निहोत्रादीनां क्रत्वन्तरताधिकरणम्

(२–३–११)

**प्रकरणान्तरे प्रयोजनान्यत्व ।२४।**

**इदं पूर्वपक्षपरं सूत्रम् ।**

कुण्डपायिनामयने एवं श्रूयते 'उपसद्भिश्चरित्वा मासमग्निहोत्र मासं दर्शपूर्णमासाभ्यां यजेत[1]' इति च । अत्र नित्यप्राप्तमासाग्निहोत्रमनूद्य

1. J. N. V. P. 101

अप्राप्तमासाख्यो गुणो विधीयते इति पूर्वपक्षः। नित्याग्निहोत्र प्राप्ति रहितानामुपसदामपि विधानं कर्तव्यं भवति। 'उपसद्भिश्चरित्वे' त्युक्तत्वात्। यदि उपसदः मासोऽपि विधीयेत तदा वाक्यभेदः। अतः प्रकरणान्तरात् कर्मान्तरमेवेति। नित्याग्नि होत्रप्रकरणस्य अयनस्य च असन्निहितत्वात्। अतश्च वाक्यभेदभयान्न गुणो विधीयत्ते। नात्र वाजिनवद्गुणभेदः। तत्र वाजिनं तु उपादेयतया विधेयो गुण, मासस्त्वनुपादेयः, अतः प्रकरणान्तरेणैव कर्मान्तरमिति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :— नित्याग्निहोत्रे मासाख्ये गुणो विधीयते। गुणद्रव्यविधाने वाक्यभेदः। तथापि, वाक्यभेदलक्षणयोः श्रुतिसिध्यर्थं वाक्यभेदोऽङ्गीक्रियते इति पूर्वपक्षः। एकवाक्यत्वसम्भवे वाक्यभेदो नाङ्गीकर्तव्यः। यावन्ति पदानि परस्परान्वय प्रतिपत्तुमल तावदेक वाक्यमिति लोके व्युत्पत्तेः। तस्मादेकवाक्यत्वसम्भवात्, प्रकरणान्तरात् कर्मान्तरमेवेदम्। अतश्च धर्मलक्षणया अग्निहोत्रशब्दो होमान्तरे एव। न तु नित्याग्निहोत्रे इति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः :—**

नित्याग्निहोत्रे मासाख्यो गुणो विधीयते इति भाट्टमते पूर्वपक्षः। गुणद्वयविधानं नित्याग्निहोत्रे इति प्रभाकरमते पूर्वपक्षः। वाक्यभेदभयात्प्रकरणान्तराच्च कर्मान्तरमेवेति भाट्टमतम्। एकवाक्यत्वेन वाक्यभेदाभावात् प्रकरणान्तराच्च कर्मान्तरमिति प्रभाकरमतम्।

—

## आग्नेयादिकाम्येष्ट्यधिकरणम्

(२-३-१२)

फलं चाकर्मसन्निधौ ।२५।
इद सिद्धान्तपरं सूत्रम् ।

'आग्नेयमष्टाकपालं निर्वपेदृत्वकामः'[1] 'इत्यत्र ऋक् (तेजः) कामफलं किं प्रकृतदर्शपूर्णमासगतम् आग्नेययागमनूद्य विधीयते उत कर्मान्तरं वेति सशयः। तत्र वाक्येन आग्नेयसम्बन्धस्य प्रतीयमानत्वात् दर्शपूर्णमासगतमाग्नेयमनूद्य तत्र फल विधीयते। प्रकरणान्तरात्कर्मान्तरमत्र न भवति। यतः अस्य वाक्यस्य अनारभ्याधीतत्वात् प्रकरणमेव नास्ति। तत्र मासोऽनुपादेयः। अत्र फलमुपादेयम्। तस्मात् फलविधिरिति पूर्वपक्षः।

यद्यप्यत्र प्रकरणान्तरं नास्ति तथापि अनारभ्याधीतत्वादसन्निधिरस्त्येव। द्रव्यदेवतयोस्सत्त्वात् न वाजिनन्यायवत्कर्मभेदः। यदि प्रकरणान्तरमपि असन्निधिकृतमिति असन्निधिरेव मासाग्निहोत्रहेतुः, तर्हि तस्यैवायं प्रपञ्चोऽस्तु। अत्र विषयप्रतिपादने पूर्वाधिकरणाद्भेदोऽस्तु, मास्तु, किन्तु कर्मान्तरमेवेति भाट्टमतेन सिद्धान्तः।

---

1. J. N. V. P. 102

प्रभाकरमतम् :–

द्रव्यदेवताभ्या प्रकृताग्नेयस्य प्रत्यभिज्ञायमानत्वात् तत्र फलं विधीयते इति पूर्वपक्षः। आग्नेयस्य अप्रकृतत्वात् प्रत्यभिज्ञा न भवति । फलानुरक्तस्य 'भावार्थस्य फलं प्रति भावार्थो विधीयते। ततश्च शास्त्रान्तरमेवेति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :–

प्रकृताग्नेयमनूद्य फल विधीयते इति पूर्वपक्षस्समान एव । पूर्वाधिकरणे अस्य चारितार्थ्याभावात् अत्र कर्मान्तरत्वसिद्धिरिति भाट्टमतम् । अप्रकृतत्वादेव प्रत्यभिज्ञाया अभावात् प्रकरणान्तरात्कर्मान्तरमेवेति प्रभाकरमतम् ।

---

## अवेष्टेरन्नाद्यफलकत्वाधिकरणम्

(२–३–१३)

सन्निधौ त्वविभागात् फलार्थेन पुन. श्रुति. ।२६।

इदं सिद्धान्तपरं सूत्रम् ।

'समे यजेत' 'दर्शपूर्णमासाभ्या यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्या यजेत' इत्येतैर्वाक्यै· देशकालनिमित्तान्याम्नायन्ते । 'एतया अन्नाद्यकामं याजयेत्'[1] इत्यनेन अवेष्टिप्रकरणस्थेन वाक्येन फलमाम्नातम् । तत्र

1. J. N. V P. 103

देशकालनिमित्तादीना अनुष्ठानसाध्यत्वाभावात् न विधीयन्ते प्रकरणिनो दर्शादिः पूर्वप्राप्तस्य पुनर्विधाने प्रयाजवदेव अभ्यासात्कर्मान्तरमिति पूर्वपक्षः। देशकालादीना यद्यपि विधेयत्व मास्तु, किन्तु विहितकर्मणा सह सम्बन्धो विधीयते। दर्शादीना पुनर्विधानमपि देशकालसम्बन्ध विधातु कर्मानुवादः। अतश्च न कर्मभेदः। विधेयगुणान्तराभावेन अनुवादासभवात् नाभ्यामात्कर्मभेद इति भाट्टमतेन सिद्धान्त

प्रभाकरमतम् :– पूर्वाधिकरण पूर्वपक्षवदेव कर्मान्तरमिति पूर्वपक्षः। कर्मसन्निधौ फलयोगः न शास्त्रान्तरमापादयति। अनुपादेयत्वाच्च नात्र फल विधीयते, किन्तु भावार्थो विधीयते। भावार्थस्य कर्मविधायकत्वाभावात् नात्र कर्मान्तरमिति प्रभाकरमतेन सिद्धान्त.।

**मतभेदः :–**

कर्मविधिरेवेति पूर्वपक्षः समान एव। देशकालादीना विहित-कर्मणा यह सम्बन्धो विधीयते। अतो न कर्मान्तरमिति भाट्टमतम्। भावार्थस्य कर्म प्रतिपादकत्वाभावात् न कर्मान्तरमिति प्रभाकरमतम्।

—:o:—

## आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम्

(२–३–१४)

आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ।२७।

इदं पूर्वपक्षपरं सूत्रम्।

अविभागस्तु कर्मणा द्विरुक्तेर्न विधीयते ।२८। अन्यार्था वा पुनः श्रुतिः। ।२९। इदं सिद्धान्तपरं सूत्रम्।

आग्नेयस्य द्विरुक्तत्वात् कर्मद्वयमुत अनुवादो वेति संशयः। "यदाग्नेयोऽष्टाकपालो अमावास्यायां पौर्णमास्या चाच्युतो भवति'

इत्यनेन आग्नेयस्य कालद्वये विधानमस्ति । यदाग्नेयोऽष्टाकपालो अमावा-स्यायां भवति 'इत्यनेन दर्शेऽपि पुनराग्नेयस्य विधानमस्ति । अतः अविशेषपुनः श्रवणलक्षणेन अभ्यासेन कर्मभेदः । तथा च आग्नेयस्य दर्शे द्विःप्रयोग इति पूर्वपक्षः ।

आग्नेय एक एवेति प्रत्यभिज्ञानात् अन्यकालवाक्यस्य अनुवाद-कता । अनुवादेन च ऐन्द्राग्नस्तुतिः । न केवलोऽग्निः समीचीनतरः, अपि तु इन्द्रसहितोऽग्निरिति स्तुतिः । ततश्च ऐन्द्राग्नः कर्तव्य इति विधेयस्तुतिः इति भाट्टमतसिद्धान्तः ।

अत्रापि प्रसिद्धादाग्नेयात्कर्मान्तरमिति पूर्वपक्षः । विहितस्य पुनर्विधान न सम्भवति । अतश्च नाभ्यासात् कर्मान्तरमिति पुनर्वचनं ऐन्द्राग्नस्तुतिपरमिति प्रभाकरमतम् ।

**मतभेदः :–**

अभ्यासात्कर्मभेद इति पूर्वपक्षस्समान एव । एक एव आग्नेय इति प्रत्यभिज्ञाबलान्न कर्मान्तरमिति भाट्टमतम् । विहितस्य पुनर्विधानाभावात् न कर्मान्तरमिति प्रभाकरमतम् ।

---

इति

द्वितीयाध्यायस्य तृतीयपादः समाप्तः

## द्वितीयाध्यायतृतीयपादाधिकरणेषु

## प्रतिपादिता विषयाः

१. प्रथमाधिकरणे ग्रहाग्रतायाः ज्योतिष्टोमाङ्गत्वं निरूपितम् ।

२. अवेष्टेः कर्मान्तरत्व द्वितीयाधिकरणे निरूपितम् ।

३. वसन्तादिवाक्येषु तत्तत्कालकर्तृविशिष्ट आधानान्तरमेव विधीयते इति तृतीयाधिकरणे प्रतिपादितम् ।

४. दाक्षायणादीना गुणतानिरूपण चतुर्थाधिकरणे कृतम् ।

५. द्रव्यदेवतायुक्तानां यागान्तरत्वमेवेति पञ्चमाधिकरणे निरूपितम् ।

६. वत्सालम्भः अग्निहोत्राङ्गसस्कारक इति षष्ठाधिकरणे निरूपितः ।

७. 'चरुमुपदधाति' इत्यत्र उपधानमेव विधीयते इति सप्तमाधिकरणे निरूपितम् ।

८. पात्नीवतस्य पर्यग्निकरणगुणकत्वमष्टमाधिकरणे निरूपितम् ।

९. अंशवदाभ्यां गुण एव विधीयत इति नवमाधिकरणे निरूपितम् ।

१०. अग्निचयनस्य संस्कारत्वमेवेति दशमाधिकरणे निरूपितम् ।

११. मासाग्निहोत्रादीनां कर्मान्तरत्वमेवेति एकादशाधिकरणे निरूपितम् ।

१२. आग्नेयादिकामेष्टेः कर्मान्तरत्वं द्वादशाधिकरणे निरूपितम् ।

१३. अवेष्टेरन्नाद्यफलकत्वं त्रयोदशाधिकरणे निरूपितम् ।

१४. आग्नेयद्विरुक्तेः कर्मान्तरत्वं नास्तीति चतुर्दशाधिकरणे प्रतिपादितम् ॥

—:o:—

## अथ द्वितीयाध्यायस्य चतुर्थः पादः

### यावज्जीविकाग्निहोत्राधिकरणम्

(२-४-१)

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ।१।
इदं पूर्वपक्षसूत्रम् ।

कर्तुर्वा श्रुतिसंयोत् ।२। लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्यत तत्रानथकमन्यत्स्यात् ।३। अपवर्ग च दर्शयति कालश्चेत्कर्मभेदःस्यात् ।४। अनित्यत्वात्तु नैवं स्यात् ।५। विरोधश्चापि पूर्ववत् ।६। कर्तुस्तु नियमात्कालशास्त्रं निमित्तं स्यात् ।७।
इयन्ति सिद्धान्तपराणि सूत्राणि ।

'यावज्जीवमग्निहोत्रं जुहुयात्' इति काम्याग्निहोत्रात् शास्त्रान्तरमुत एकं शास्त्रं वेति संशयः । 'यावज्जीवमग्निहोत्र जुहोति' इति बह्‌वृचब्राह्मणेऽस्ति । प्रकृते काम्याग्निहोत्रे पूर्वमप्राप्तयावज्जीवकालसम्बन्धः अनेन विधीयते । तस्मादस्य नित्यप्रयोगविधायकाभावेन अग्निहोत्रस्य एक एव काम्यप्रयोगः पर्यवस्यति । अतश्च यावज्जीवमेक-

मेव कर्म अनुष्ठातुं न शक्यत इति काम्यकर्मणोऽभ्यासिद्धये धर्मविधिरिति पूर्वपक्षः ।

यावज्जीवशब्दः न कालवाचकः, किन्तु काललक्षण एव जीवनमिति तस्य वाच्यार्थः । शब्दान्तरादीनामभावाच्च नात्र अतः जीवनस्य निमित्तत्वात्, प्रयोगभेद एव । निमित्ते सति त्यागायोगादत्र नित्यत्वमेवेति । अतश्च नित्यकाम्यप्रयोगौ भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–**

प्राप्तकर्मोद्देशेन जीवनरूपकालगुणो विधीयते । अतः कर्मेति पूर्वपक्षः । नित्यवाक्येन अधिकारस्यैव चोदनैषा । 'जीवनेन कालः जुहोतीति' होमाभ्यासः स्यात् । अतश्च चोदनायां प्रयोगान्तरमेवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः –**

काम्यकर्मोद्देशेन गुणविधिरिति पूर्वपक्षः । प्रयोग सिद्धान्तः समान एव ।।

---

## सर्वशाखाप्रत्ययैककर्मताधिकरणम्

(२-४-२)

नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्ति समाप्तिवचन-प्रायश्चित्तान्यार्थदर्शनाच्छास्त्रान्तरे कर्म भेदः स्यात् ।८। इदमेक पूर्वपक्षपरं सूत्रम् ।

एक वा सयोगरूपचोदनाख्याविशेषात् ।९। नाम्ना स्यादनभिधानत्वात् ।१०। सर्वेषा चैककर्म्य स्यात् ।११। कृतकं चाभिधानम् ।१२। एकत्वेऽपि परम् ।१३। विद्यायां धर्मशास्त्रम् ।१४। आग्नेयवत्पुनर्वचनम् ।१५। अद्विवचन वा श्रुतिसंयोगाविशषात् ।१६। अर्थासन्निधेश्च ।१७। न चैकं प्रतिशिष्यते ।१८। समाप्तिवच्च सम्प्रेक्षा ।१९। एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ।२०। प्रायश्चित्तं निमित्तेन ।२१। प्रक्रमाद्वा नियोगेन ।२२। समाप्ति पूर्ववत्वाद्यथाज्ञाते प्रतीयेत ।२३। लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहस्याहार–व्यपदेशः स्यात् ।२४। द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यतिष्ठेत तस्मान्नित्यानुवादः स्यात् ।१५। विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ।२६।

सारस्वते विप्रतिषेधाद्यदेति स्यात् ।२७। उपहव्येऽ प्रतिप्रसव. ।२८। गुणार्थो वा पुन श्रुतिः ।२९। प्रत्य- यं चापि दर्शयति ।३०। अपि वा क्रमसंयोगाद्विधिपृथ- क्त्वमेकस्यां व्यवतिष्ठेत ।३१। विरोधिना त्वसयोगा- दैककर्म्ये तत्संयोगाद्विधीना सर्वकर्मप्रत्ययः स्यात् ।३२। इयन्ति सिद्धान्तपराणि सूत्राणि ।

शाखा भेदात्कर्मभेदोऽस्ति न वेति संशय. । एकमेवदर्शपूर्णमा- साख्यं कर्म काठक, काण्वादिशाखास्वाम्नातम् । भेदकारणानां नामभेदा- दीनां बहूनामुपलम्भात् शाखाभेदात्कर्म भिद्यते एव । 'काठकम्' 'काण्वम्' इत्यादि. नामभेदः । कारीरिवाक्यान्यधीयमाना. केचिच्छा- खिनो भूमौ भोजनमाचरन्ति । अन्ये च नाचरन्ति । अतः नामधर्मादि- भेदोपलम्भाच्छाखाभेदात्कर्मभेद इति पूर्वपक्ष' ।

यद्यपि शाखाभेदोऽस्ति, तथापि रूपाद्यभेदात् न कर्म भिद्यते । यथा 'आग्नेयमष्टाकपालादियागरूपं यदेकस्यां शाखायां तदेवान्यत्र लभ्यते। अपि च 'दर्शपूर्णमासाभ्यां यजेत' इति यागरूपः पुरुषव्यापारश्च एकविध एवास्ति । 'दर्शपूर्णमासौ' इति कर्माप्येकमेव । फलसम्बन्धोऽप्येक एव। तस्मादभिन्न कर्मैव । अध्येतृभेदात्पुनरुक्तदोषो न भवति । काण्वा- दिकं तु न कर्मनाम । किन्तु ग्रन्थनामैवैतत् । तस्मान्न कर्मभेद इति भाट्टमतेन सिद्धान्तः

**प्रभाकरमतम् :–**

नामादिभेदस्यापि कर्मभेदकत्वात् कर्म भिद्यते इति पूर्वपक्षः ।

एकशाखागतस्य एकस्यैव कर्मणः कर्मद्वयमिति व्यवहाराभावात् एकस्यां शाखायां विधिभेदेन विधेयभेदो न युक्तः। शाखान्तरेषु तु प्रमातृभेदादेव अज्ञातज्ञापनरूपं अप्रवृत्तप्रवर्तनं च विधेरुपपन्नमिति भेदमापादयितुं न शक्नोति इति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः :-**

नामादिगुणोपलम्भात् शाखाभेदात्कर्मभेद इति पूर्वपक्ष. समान एव। एकस्यैव कर्मणः शाखान्तरेषूपलम्भात् न रूपादिभेदोऽस्ति। तस्मादेकमेव कर्मेति भाट्टमतम्। प्रमातृभेदेनैव विधित्वस्य सिद्धत्वात् शाखाभेदे सत्यपि न कर्मान्तरत्वमिति प्रभाकरमतम्॥

---

इति

द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः

## द्वितीयाध्यायस्य चतुर्थपादाधिकरणेषु प्रतिपादिता विषया:

१. यावज्जीववाक्ये कर्मान्तरमेवेति प्रथमाधिकरणे प्रतिपादितम् ।

२. एकस्यैव कर्मण: शाखाभेदे सत्यपि कर्मान्तरत्वं नास्तीति द्वितीयाधिकरणे निरूपितम् ।

इति
द्वितीयाध्यायस्समाप्त:

—:o:—

## अथ तृतीयाध्यायस्य प्रथमः पादः

### प्रतिज्ञाधिकरणम्

(३–१–१)

अथातः शेषलक्षणम् ।१। इदं सिद्धान्तपरं सूत्रम् ।

द्वितीयाध्याये कर्मभेदः प्रतिपादितः । सिद्धे कर्मभेदे ततः भिन्नक्रियासु शेषशेषिभावः बुभुत्सित इति सोऽयं शेषशेषिभावः अस्मिन् तृतीयाध्याये प्रतिपाद्यते । यदि शेषता शाब्दी स्यात्तदा अयमध्यायः आरम्भणीयः । यद्यशाब्दी भवति तदा नायमध्याय आरम्भणीयः । तस्मात् शेषता शाब्दी, अशाब्दी वेति संशयः । शेषत्वं तावन्न केनापि शब्देन प्रतीयते । शेषशेषिभावे न व्युत्पत्तिरपि दृष्टा । व्युत्पत्तेश्च प्रयोजकत्व क्रियाकारकसंसर्गान्वये एव दृश्यमानत्वात् शेषतायाः शाब्दत्वं नास्ति । तस्मात् अयमध्याय अनारम्भणीय इति पूर्वपक्षः ।

क्रियायां कारकाणामन्वयस्तु गुणप्रधानभावमन्तरेण न भवति । यतः परस्पराकांक्षारहितयोः द्वयोर्गुणयोरन्वयाभावात् । तस्मात् यथा व्युत्पत्तिसम्भवात्क्रियाकारकतदन्वयश्शाब्दः तथैव तदन्वयान्तर्गतश्शेषशेषिभावोऽपि शाब्दः । तस्मादयमध्यायः आरम्भणीय इति भाट्टमतेन सिद्धान्तः ।

## शेषलक्षणाधिकरणम्

(३-१-२)

शेषः परार्थत्वात् ।२। इदं पूर्वपक्षपरं सूत्रम् ।

शेषतायाः शाब्दत्वाद्धेतुस्वरूपे स्तः न वेति संशयः । तत्र शेषत्वस्य निर्वक्तुमशक्यत्वान्नास्ति लक्षणम् । तद्यथा—ः शेषत्वं नाम अविनाभूतत्वमिति चेत्–दर्शपूर्णमासान्तर्गतषड्ङ्गाना अविनाभूताना शेषत्वप्रसङ्गः । तस्मादविनाभूतत्वं शेषत्वं न भवति । यदि प्रयोज्यत्वमेव शेषत्वमिति चेत्–'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र तुषोपवापं प्रति शेषस्यापि कपालस्य तत्र प्रयोज्यत्वाभावात् अत्र शेषत्वं न भवेत् । तस्मात्प्रयोज्यत्वं शेषत्वं न भवति । अपि च विध्यादिविहितस्य पलाशशाखाच्छेदस्य सत्यपि शेषत्वे, तत्र विध्यन्तविहितत्वाभावाच्च विध्यन्तविहितत्व शेषत्वं न भवति । अतः येन केनापि हेतुना शेषतायाः स्वरूपं निरूपयितुमशक्यत्वात्, हेतोरभावाच्च शेषस्य स्वरूपहेतू न स्त इति पूर्वपक्षः ।

'विमतः प्रयाजादिः शेषः, परार्थत्वात्, भृत्यादिवत्' इत्यनुमानेन हेतुः सुनिरूपो भवति । एवञ्च अविनाभूतत्वादीना शेषलक्षणत्व नास्ति । शेषलक्षणेन लक्षिताकारः स्वरूपम् । पारार्थ्यस्यैव हेतुत्वे लक्षणत्वे च साङ्कर्य न भवति, आकारभेदेन तद्भेदात् । तस्माच्छेषतायाः हेतुस्वरूपे विद्येते इति भाट्टमतेन सिद्धान्तः

**प्रभाकरमतम् :-**

पूर्वोक्ताधिकरणद्वयमपि भाष्यानुसारं एकाधिकरणत्वेनैव प्रभाकरेण प्रतिपादितम् । तद्यथा –: शेषत्वे यदि हेतुः स्यात्तदा शेषलक्षणमारम्भणीयं भवति । यतः पदाना कार्यान्विते एव शक्तिग्रहात्, वाक्यार्थे परस्परक्रियाकारकभावमात्रेणैव अन्वयात्, तत्र पदार्थाना शेषत्वे हेतोरभावात् लक्षणं नारम्भणीयमिति पूर्वपक्षः । सर्वत्र पदार्थान्वयस्तु गुणप्रधानभावेन हि युज्यते । अतः गुणत्वमेव शेषत्वम्, कार्यं च प्रधानं भवति । तस्माच्छेषत्वं विना पदार्थाना सम्बन्धस्यैवानुपपत्तेः शेषत्वं सिद्ध्यति । तस्मात्परार्थत्वादिहेतोस्सद्भावात् शेषलक्षणमपि आरम्भणीयं भवति । तथा च 'पारार्थ्यः शेषः' इति शेषलक्षणम् ।

**मतभेदः :-**

शेषत्वस्य हेतुस्वरूपयोरभावान्नायमध्यायः आरम्भणीय इति भाट्टमते पूर्वपक्षः । शेषस्य हेतुर्नास्तीति शेषलक्षण नारम्भणीयमिति प्रभाकरमते पूर्वपक्षः । परार्थत्वादिति हेतोः निरूपयितु शक्यत्वात् 'शेषः परार्थः' इति शेषलक्षणमुपपद्यत इति भाट्टमतम् । हेतोस्सुनिरूपणात् शेषलक्षणमारम्भणीयमिति प्रभाकरमतम् । लक्षणन्तु 'शेषः परार्थ' इति ॥

—:o:—

## शेषलक्ष्याधिकरणम्

(३-१-३)

द्रव्यगुणसंस्कारेषु बादरिः ।३।
इदं पूर्वपक्षपरं सूत्रम् ।

कर्माण्यपि जैमिनिः फलार्थत्वात् ।४। फल च पुरुषार्थत्वात् ।५। पुरुषश्च कर्मार्थत्वात् ।६। इयन्ति सिद्धान्त सूत्राणि ।

किं द्रव्यगुणसंस्कारेष्वेव शेषत्वमुत फलपुरुषकर्मस्वपि इति संशयः । फलादिषु उपकारिकत्वशेषलक्षणाभावात् न तेषु शेषत्वमिति बादरेर्मतम् । पारार्थ्यस्य शेषलक्षणस्य फलपुरुषकर्मस्वपि सम्भवात् फलादिषु शेषत्वमस्त्येवेति जैमिनेर्मतम् । तत्र प्रधानभूते स्वामिनि गर्भदासोपकारित्वदर्शनादतिव्याप्तिः । तस्माज्जैमिनेर्मतमेव मुख्यमिति भाट्टमतेन सिद्धान्तः । स्फ्यकपालादिकं द्रव्यम्, अरुणादिको गुणः, अवघातप्रोक्षणादिकः संस्कारः, स्वर्गः फलम्, तत्कामी पुरुषः, दर्शपूर्णमासौ कर्म इति ।

**प्रभाकरमतम् :–**

'यजेत' इत्यत्र लोकव्युत्पत्त्या यागस्यैव कर्तव्यतया अवगतिर्भवति । यागकार्यं च अन्यार्थं न भवतीति न यागस्य शेषता । अतः यागेन फलं भावयेदिति विनियोगाभावात् न फल, पुरुष, कर्मणा शेषत्वमस्तीति

बादरेर्मतम् । कर्तृत्वातिरिक्तं नियोज्यत्वमपि पुरुषस्यास्ति । तस्मात् स्वर्गकामवाक्ये कामी नियोज्यः । फलस्य यागसाधनतामन्तरेण पुरुषः न नियुज्यते । अतश्च यागस्वर्गयोः साध्यसाधनभावः स्पष्ट एव । तस्मात् फलपुरुषकर्मणा च शेषत्वमस्त्येवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः :–**

फलपुरुषकर्मणां शेषत्वं नास्तीति बादरेर्मतम् । बादर्युक्तशेष-लक्षणे अतिव्याप्तेः 'पारार्थ्यं शेषः' इति शेषलक्षणे दोषाभावाज्जैमिनेर्मतमेवमुख्यमिति भाट्टमतेन सिद्धान्तः । 'यजेत' इत्यत्र यागनिवृत्तिमात्रेण चरितार्थत्वान्नान्येषा शेषत्वमस्तीति बादरिमतस्य पूर्वपक्षः । फलपुरुष-कर्मणामपि शेषत्वमस्तीति प्रभाकरमतम् ।

– —

## निर्वपणादीनां व्यवस्थितविषयताधिकरणम्

(३–१–४)

तेषामर्थेन सम्बन्धः ।७। विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषात्प्रकरणाविशेषाच्च ।८।
इमे पूर्वपक्षपरे सूत्रे ।

अर्थलोपादकर्म स्यात् ।९। फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ।१०।
इयन्ति सिद्धान्तसूत्राणि ।

व्रीह्याज्यसान्नाय्यधर्माः किं साङ्कर्यगामिनः उत व्यवस्थिता वा

इति संशयः । तत्र सर्वेषामपि धर्माणा फलहेतुत्वसम्भवात् दर्शपूर्णमासा पूर्वेण सङ्गच्छन्ते । अवान्तरापूर्वस्य कल्पकाभावात् सर्वे धर्माः यस्मिन् कस्मिन्नपि द्रव्ये अनुष्ठिताः फलापूर्वं जनयन्त्येव । तस्मात्साङ्कर्यमिति पूर्वपक्षः ।

आग्नेयादीनां षण्णा यागानां सम्भूय फलापूर्वमुत्पादयितु सामर्थ्य नास्ति । भिन्नक्षणवृत्तित्वात् । अतश्च फलापूर्वजननसमर्थं वत्तदवान्त-रापूर्वं कल्प्यं भवति । तत्र पुरोडाशद्रव्यकयागजन्यापूर्वं व्रीहिधर्माणां प्रयोजकम् । एवमेवान्यत्रापि । अतश्च व्यवस्थयैव धर्मप्राप्तिः । न च दर्शपूर्णमासप्रकरणात्साङ्कर्यमिति वाच्यम् । 'व्रीहीन् प्रोक्षति' इत्यादि-श्रुतीनां प्रकरणापेक्षया ज्यायस्त्वात् । श्रुत्या व्यवस्थयैव धर्मास्तत्र तत्र भवन्ति इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–**

'व्रीहीनवहन्ति' इत्यादौ व्रीह्युद्देशे क्रियमाणस्यावघातस्य यदि तुषविमोकः कार्यं तदा व्रीहिस्वरूपगतापूर्वसाधनत्वाभावात् नावान्तरा-पूर्वकल्पकम् । अत 'व्रीहीन्' इति द्वितीया श्रुतिं भङक्त्वा प्रयाजवदेव प्रकरणे नियोज्यः । तथा च व्रीहीणा सर्वयागार्थत्वात् आज्यादावपि अवघातादिकं कर्तव्य भवति । एवञ्च अव्यवस्थयैव धर्माः प्राप्नुवन्ति इति पूर्वपक्षः । 'व्रीहीनवहन्ति' इति दर्शपूर्णमासनियोगात् नियोगान्तरं नावगम्यते । अपि तु प्रयाजादाविव स एव नियोग. प्रधानार्थव्रीहिद्वारेण अनुप्रविशति । किन्तु प्रयाजादेरत्राय विशेषो वर्तते । अयमवघातः तुषविमोकरूपदृष्टद्वारक' । स च तुषविमोकः आज्यादौ नास्तीति न तत्र अवघातः । तस्माद्व्यस्थयैव धर्मप्राप्तिरिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेद.** :– अवान्तरापूर्वस्य कस्यचिदप्यभावात् सर्वे धर्माः

सङ्कीर्णा एवेति भाट्टमते पूर्वपक्षः । व्रीहीणा सर्वयागार्थत्वात् आज्येऽपि अवघात इति प्रभाकरमते पूर्वपक्षः । आग्नेयाद्यवान्तरापूर्वस्यैव सत्वात् श्रुतिवशाच्च व्यवस्थयैव धर्माः प्राप्नुवन्ति इति भाट्टमतम् । आज्ये तुषविमोकरूपदृष्टप्रयोजनाभावात् न तत्रावघातः । अतश्च व्यवस्थयैव धर्माः प्राप्नुवन्ति इति प्रभाकरमतम् ॥

—:o:—

## स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणम्

(३–१–५)

द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ।११।

इदं सिद्धान्तपरं सूत्रम् ।

स्फ्यकपालादेर्द्रव्यस्य साङ्कर्यमुत व्यवस्थितिरिति संशयः । 'स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्याचोलूखलं च मुसलं च दृशच्चोपला चैतानि वै दश यज्ञायुधानि' इति । यद्यपि व्रीह्या-दिस्थले अवघातादीना व्यवस्थयैव प्राप्तिरिति निर्णीता । तथापि स्फ्यादिसाङ्कर्यं निराकर्तुमशक्यमिति येन केनापि द्रव्येण यस्यां कस्या-ञ्चिदपि क्रियाया कृतायामपि न यज्ञायुधत्वस्य विरोधः । अतः साङ्क-र्यमेवेति पूर्वपक्षः ।

अवघातादिसंस्कार इवात्रापि 'स्फ्येन उद्धन्ति' इत्यादिविनियोग वाक्यवशात् द्रव्याणां व्यवस्थैव । अतश्च बहूनां वाक्यानां वैयर्थ्यापेक्षया एकं यज्ञायुधवाक्यमेव अनुवादकम् । 'यज्ञायुधानि सम्भरन्ति' इति

यज्ञायुधवाक्यस्यानुवादोऽपि न व्यर्थो भवति। अतश्च स्फ्यकपालादि द्रव्याणि व्यवस्थितान्येवेति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम् :–**

संशयस्तु पूर्वोक्त एव। 'स्फ्यश्च कपालानि च' इत्यादि सन्निधापनविधिबलेन कर्मविशेषनिरपेक्षाणि। तथा च सर्वाणि द्रव्याणि सर्वत्राव्यवस्थयैव, प्राप्नुवन्ति। तस्मात् द्रव्याणां साङ्कर्यमेवेति पूर्वपक्षः। 'स्फ्येनोद्धन्ति' इत्यादिभिः स्फ्यादीनां विशेषविधायकत्वेन विनियोगात् द्रव्याणा व्यवस्थैवेति प्रभाकरमतम्।

**मतभेदः :–**

स्फ्यादि द्रव्याणां साङ्कर्य निराकर्तु न शक्यत इति द्रव्यसाङ्कर्यमेवेति भाट्टमते पूर्वपक्षः। कर्मविशेषनिरपेक्षत्वेन सर्वद्रव्यसाङ्कर्यमिति प्रभाकरमते पूर्वपक्षः। 'स्फ्येनोद्धन्ति' इत्यादिभिरेव स्फ्यादिद्रव्याणां व्यवस्थयैव प्राप्तिरिति सिद्धान्तस्तु समान एव॥

—:o:—

## आरुण्यादिगुणानामसङ्कीर्णताधिकरणम्

(३–१–६)

अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात् ।१२।
इदं पूर्वपक्षपरं सूत्रम्।

आरुण्यादिगुणस्सङ्कीर्ण उत असङ्कीर्णो वेति संशयः। 'अरुणया

पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति ज्योतिष्टोमे श्रूयते। तत्र 'अरुणया' इत्यत्र अरुणगुणवाचिन: अरुणशब्दस्थ तृतीयाश्रुत्या सोमक्रय-साधनत्वमवगम्यते । अरुणगुणस्य च द्रव्यमन्तरेण अन्वयाभावात् प्रकरणेनान्वयो बोध्य: । तथा च प्रकरण ग्रहचमसेषु अरुणिमान निवेश-यति । तथा च ग्रहचमसादय: अरुणिमान:कर्तव्या इति पर्यवस्यति। पिङ्गाक्षी, एकहायनीपदयोस्तु व्युत्पत्त्या द्रव्यपरत्वेन क्रयभावनायामन्वय: सिध्यत्येव । अतश्च अरुणगुण: प्रकरणेन विनियुज्यत इति पूर्वपक्ष: ।

एकहायनीशब्दवदेव अरुणाशब्दोऽपि गोद्रव्यमेवाच्छिनत्ति द्रव्यस्य साधनत्त्वात्तद्वारा अरुणगुण: क्रयभावनायामन्वेति । गुणवाचकस्यास्य शब्दस्य गुणिद्रव्यपरत्व लक्षणयोच्यते । अतश्च लक्षणाङ्गीकारो न्याय्य इति न च वाच्यम् । यत: अरुणशब्द: अरुणगुणपरस्सन् अमूर्तस्य साधन-त्वाभावादर्थापत्त्या द्रव्यमपि बोधयति । एवञ्च या अरुणा सा एकहा-यनी, या एकहायनी सा अरुणा इत्येव अन्वयद्वारा अरुणगुण: एकहायन्या-मन्वेति । तथा च आरुण्यविशिष्टैकहायन्या सोमक्रय भावयेदिति । तथा च आरुण्यविशिष्ट एकहायन्या सोमक्रय भावयेदिति । तस्मात् अरुणा-दिगुणानां असङ्कीर्णतैवेति भाट्टमते सिद्धान्त: ।

**प्रभाकरमतम्** :—

कारकाणा परस्परान्वयाभावात् आरण्यस्य न एकहायन्यामन्वय:। अमूर्तत्वाच्च न नियोगेऽन्वय: । ततश्च वाक्य भित्त्वा प्रकरणे सर्वद्रव्येषु आरुण्यस्य निवेश इति पूर्वपक्ष. । वाक्येन आरुण्यस्य क्रयभावनासम्बन्धा-वगमात् तत्रैवास्य निवेशो युक्त: । गुणस्य द्रव्यविशेषणत्वात् यत्र आरुण्यं समवेत तेन क्रय: कर्तव्य इति ज्ञायते । अतश्च आरुण्यस्य एकहायन्या निवेशद्वारा आरुण्यस्य क्रये विनियोगस्सिद्धचतीति प्रभाकरमतेन सिद्धान्त: ।

**मतभेद:** :— उभयमतेऽपि पूर्वोत्तरपक्षौ समावेव ।।

—

## ग्रहसम्मार्जनाधिकरणम्

(३-१-७)

एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ।१३।
इदं सिद्धान्तपर सूत्रम् ।

सर्वेषा वा लक्षणत्त्वादविशिष्टं हि लक्षणम् ।१४।
चोदिने तु परार्थत्वाद्यथाश्रुति प्रतीयेत ।१५।
इमे द्वे सिद्धान्तसूत्रे ।

ग्रहमित्यत्र एकत्वं विवक्षितमुत अविवक्षितं वेति संशयः । तत्र 'दशापवित्रेण ग्रह सम्मार्ष्टि' इत्यत्र ग्रहपदगतं उद्देश्यगतं एकत्वं विवक्षितमेव, 'यजेत' इत्यत्र उपादेयगतैकत्ववत् । अपि च ग्रहणशब्दः जातिवाचकः । तदा जातेस्संस्कार्यत्वे सति एकस्मिन्नपि द्रव्ये अनुष्ठानेन जातिस्संस्कृता भवति, तस्मादपि एक एव ग्रहः सम्मार्जनीय इति पूर्वपक्षः ।

ग्रहमित्यत्र द्वितीयाया. उद्देश्यत्वावगमात् प्रयोजनवत्तया च प्राधान्य गम्यते । अतश्च तदुद्दिश्य सम्मार्गरूपो गुणो विधीयते । सम्मार्जयितव्यग्रहाणा इयत्ताया अभावात् अबुभुत्सितत्वात् उद्देश्यगतमेकत्वमविवक्षितम् । अतश्च यावन्तो ग्रहास्सन्ति ते सर्वेऽपि सम्मार्जनीया एवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :—**

'ग्रहम्' इत्यत्र यथा ग्रहत्वमाद्रियते तथा श्रुतेरेकत्वमप्याद्रियते । तस्मादेको ग्रहः सम्मार्जनीय इति पूर्वपक्षः । पदार्थान्तरसम्बन्धः प्रधानस्यैव भवति । न तु तद्विशेषणस्य । तथा च सम्मार्गः ग्रहोद्देशेन विधीयते, सख्यादेस्तु न संस्कारेण सम्बध्यन्ते । तस्मादुद्देश्यगतसख्याया अविवक्षया सर्वग्रहोद्देशेन सम्मार्गो विधीयते इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः :—**

'ग्रहम्' इत्यत्र एकत्व विवक्षितमिति पूर्वपक्षः । तत्र उपादेयपशुगतैक-त्ववदेव उद्देश्यगतमपि एकत्व विवक्षितमेवेति भाट्टमते । यथा ग्रहत्वं विवक्षितम्, तद्वदेव एकत्वमपीति प्रभाकरमते । उद्देश्यगतत्वादेव सख्या अविवक्षितेति सिद्धान्तस्समान एव ।।

—:o:—

## चमसादौ सम्मार्गाद्यप्रयोगाधिकरणम्

(३–१–८)

सस्कारा्द्वा गुणानामव्यवस्था स्यात् ।१६।
इदं पूर्वपक्षसूत्रम् ।

व्यवस्था वार्थस्य श्रुतिसयोगात्तस्य शब्दप्रमाणत्वात् ।१७।
इदं सिद्धान्तपरं सूत्रम् ।

ग्रहेष्विव चमसेष्वपि सम्मार्गोऽस्ति न वेति संशयः । तत्र यथा

'ग्रहम्' इत्यत्र एकत्वस्याविवक्षा तथैव प्रातिपदिकार्थस्यापि अविवक्षायां ग्रहशब्दस्य सोमपात्रोपलक्षकत्वात् ग्रहेष्विव चमसेष्वपि सम्मार्गः कर्तव्य इति पूर्वपक्षः। वाक्यभेदेन एकत्वस्य दृष्टत्वात् एकत्वमविवक्षितम्। न तथा ग्रहत्वं दृष्टम्। तस्मात् सोमावसेकनिरहरणप्रयोजने प्रमाणाभावात् न चमसादौ सम्मार्गं। तस्माच्चमसेषु सम्मार्गो नास्तीति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :–

सोमावसेकनिरहरणप्रयोजनस्य अविशेषात्, 'ग्रहम्' इत्यत्र प्रातिपदिकस्य च अविवक्षायां चमसादावपि सम्मार्गः कर्तव्य इति पूर्वपक्षः। 'ग्रहं सम्मार्ष्टि' इत्यत्र श्रुतितः सोमावसेकनिरहरणप्रयोजनार्थं उद्देश्यगतत्वात् एकत्वस्याविवक्षायां ग्रहेषु सम्मार्गो विधीयते। ग्रहेषु चमसेषु च अभ्यासापूर्वभेदात् न तुल्यन्यायता। अतो न चमसादौ सम्मार्गं इति प्रभाकरमतेन सिद्धान्तः।

मतभेदः –

ग्रहेष्विव चमसेष्वपि सम्मार्गं इति पूर्वपक्षः। तत्र एकत्ववदेव ग्रहत्वस्याप्यविवक्षायां चमसादावपि सम्मार्गं इति भाट्टमते। प्रयोजनस्याविशेषात् चमसादावपि सम्मार्गं इति प्रभाकरमते। चमसेषु सम्मार्गो नास्तीति सिद्धान्तः। अदृष्टत्वात् ग्रहत्वं विवक्षितमेवेति भाट्टमते। तुल्यसाधनताया अभावात् न चमसादौ सम्मार्गं प्रभाकरमतेः।

—:o:—

## सप्तदशारत्नितायाः पशुधर्मताधिकरणम्

(३–१–९)

आनर्थक्यात्तदङ्गेषु ।१८। इदं सिद्धान्तसूत्रम् ।

'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इत्यत्र सप्तदशारत्निपरिमाण सङ्ख्या किं वाजपेयकर्मणोऽङ्गमुत पशोरङ्ग वेति संशयः। तत्र सप्तदशारत्निबाजपेयशब्दयोरानन्तर्यात् वाजपेयकर्मणः इदमूर्ध्वमानं अङ्गं भवति। तथा च प्रकरणमपि अनुगृह्यते। एवञ्च वाजपेयकर्मणः ऊर्ध्वमानं न सम्भवतीति वाजपेयगतं खादिरमूर्ध्वं यच्छोडशिपात्रं तस्मिन्नद उन्मान प्रथमं सम्बध्य तद्वारा कर्मणा अन्वेति। तथा च यूपशब्देन षोडशिपात्रं लक्षणीम्। अत. उन्मान कर्मण एवाङ्गमिति पूर्वपक्ष·।

यद्यपि सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यमस्ति, तथापि 'सप्तदशारत्निर्यूपः' इति सामानाधिकरण्यवशात् यूपे एव सङ्ख्यान्वयः। ततश्च यूपद्वारा उन्मानं पशोरङ्गं भवति। पशुद्वारा च कर्मणोऽङ्गम्। वाजपेयस्य सोमयागतया तत्र यूपो न सम्भवति। तस्मात् पशुव्यवधानात्तत्र यूपसम्भवात् उन्मान पशुद्वारा कर्मणोऽङ्ग भवत्येव। अतश्च यूपे एव उन्मानसम्भवात् नात्र यूपषोडशिपात्रे लक्षणेति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम् :–**

किं सप्तदशसंख्या 'वाजपेयस्य' इत्यत्र अन्वेति उत युपपदे इति

संशयः । यदि यूपे अन्वयः तदा 'वाजपेयस्य' इत्यस्य वैयर्थ्यं भवति । तस्मात् वाजपेयशब्देनैव अन्वयः । तथा च आश्रयापेक्षायां ऊर्ध्वयूपशब्देन ऊर्ध्वपात्रं लक्षणीयमिति पूर्वपक्षः । 'चैत्रस्य नप्ता' इत्यादाविव षष्ठ्याः सम्बन्धिसम्बन्धवाचित्वसम्भवात् वाजपेयस्य परम्परया यूपसम्बन्धात् यूपे एव सप्तदशारत्निताया निवेश इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः :–**

संख्या यदि कर्मणोऽङ्गम्, तदा षोडशिपात्रे लक्षणा भवति । तस्मात् यूपे एव संख्या निविशते इति उभयमतम् ।

——

## अभिक्रमणादीनां प्रयाजमात्राङ्गताधिकरणम्

(३–१–१०)

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ।१९।
इदं पूर्वपक्षपरं सूत्रम् ।

साकांक्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ।२०।
इदं सिद्धान्तपरं सूत्रम् ।

'अभिक्रामं जुहोति' इत्युक्तमभिक्रमणं किं कृत्स्नदर्शपूर्णमासकर्त्रा सम्बध्यते उत प्रयाजकर्त्रा वा इति संशयः । 'अभिक्रामं जुहोति' इतीदं वाक्यं यद्यपि प्रयाजसमीपे श्रूयते । तथापि अभिक्रमणक्रियायाः कारकत्वाभावात् न होमक्रियान्वयो भवति । अतश्च कृत्स्नदर्शपूर्णमासकर्त्रैव सम्बध्यते इति पूर्वपक्षः ।

क्रियारूपत्वादेव अभिक्रमण न दर्शपूर्णमासक्रियया सम्बध्यते। अतश्च सन्निधिबलादेव प्रयाजकर्त्रा सम्बध्यते इति भाष्यमनुसृत्य सिद्धान्तः।

एतदेवाधिकरणं वार्तिककारमतेन :– संशयस्तु पूर्वोक्त एव। प्रयाजसन्निध्यपेक्षया दर्शपूर्णमासप्रकरणस्य प्रबलत्वात् प्राकरणिकेषु कृत्स्नेष्वप्यभिक्रमण भवतीति पूर्वपक्ष। प्रयाजमध्ये अभिक्रमणस्य आम्नातत्वात् महाप्रकरणात् अवान्तर प्रकरणस्यैव प्रबलत्वात् प्रयाजमात्रे एव अभिक्रमणं निविशते इति सिद्धान्तः।

प्रभाकरमतम् :– 'कर्म, कर्मसाध्य न भवति' इति काश्यपोक्त्यनुसारं अभिक्रमणकर्म होमकर्मणा नान्वेति। अतः वाक्य भित्त्वा अभिक्रमणस्य प्रकरणे निवेशः। तथा च प्राकरणिकसर्वक्रियासु अभिक्रमण कर्तुरिति पूर्वपक्षः। णमुलन्तत्वात्कर्तृद्वारा अभिक्रमणस्य जुहोत्यन्वयो भवत्येव। अत· प्रयाजकर्ता सन्निहित इति तत्रैव अभिक्रमणमिति प्रभाकरमते सिद्धान्त.।

**मतभेद.** :– अभिक्रमणक्रिया प्रकरणात् कृत्स्नदर्शपूर्णमासकर्त्रैव सम्बध्यत इति पूर्वपक्षः। तत्र क्रियाया क्रियान्वयाभावादभिक्रमणस्य प्रकरणात्सम्बन्ध इति भाट्टमते। कर्म कर्मसाध्यं न भवतीति प्रकरणात्सम्बन्ध इति प्रभाकरमते। अभिक्रमण प्रयाजकर्त्रैव सम्बध्यते इति सिद्धान्तः। तत्र भाट्टमते अवान्तरप्रकरण हेतुः। प्रभाकरमते सन्निधिर्हेतुरिति॥

—:o:—

## उपवीतस्य प्राकरणिकाङ्गताधिकरणम्

(३-१-११)

सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ।२१।
सिद्धान्तसूत्रमिदम् ।

'उपव्ययत' इत्यस्य सामिधेन्यङ्गता उत दर्शाङ्गता वेति संशयः । तत्र दर्शपूर्णमासप्रकरणे 'विश्वरूपो वै त्वाष्ट्रः' इत्यस्मिन् प्रपाठके सप्तमाष्टमयोरनुवाकयोः सामिधेनीब्राह्मणमाम्नातम् । नवमे निवित्संज्ञकाना 'अग्ने महाम्असि ब्राह्मणभारत' इत्यादीनां मन्त्राणा ब्राह्मणम् । दशमे काम्याः सामिधेनीपक्षा. । एकादशे तु उपवीतमेवं विहितम् । 'निवीतं मनुष्याणा, प्राचीनावीतं पितॄणां, उपवीत देवानां, उपव्ययते देवलक्ष्ममेव, तत्कुरुते' इति श्रूयते । पूर्वाधिकरणन्यायवदेवात्रापि उपवीतविधानात्पूर्वं सामिधेनीनां प्रकरणमस्तीति अवान्तरप्रकरणात् सामिधेन्यङ्गमुपवीतमिति पूर्वपक्षः । निविद्ब्राह्मणेन सामिधेनीप्रकरणस्य विच्छेदात् न सामिधेन्यङ्गता उपवीतस्य । अपि च लिङ्गादेव निविदां अग्न्यङ्गत्वावगतेः, निविदां न सामिधेन्यङ्गता । निविदां च प्रकरणाभावात् न निविदङ्गता उपवीतस्य । तथा च सन्निध्यपेक्षया प्रकरणस्यैव बलीयस्त्वात् उपवीतं दर्शपूर्णमासाङ्गमेवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :—उपव्ययत इत्यत्र उपव्यानं किं सामिधेन्यनुवचनेन सम्बध्यते उत कृत्स्नप्रकरणे वा इति संशयः । तत्र उपव्यानस्यान्विता-

भिधानाय कर्त्रपेक्षायास्सत्वात् । सन्निहितसामिधेनीकर्ता तदाकाक्षां निवर्तयति । तथा च सामिधेन्यनुवचनेन उपव्यानं सम्बध्यते इति पूर्वपक्षः । अनुवचनस्यायमनुवाद एव । ततश्च अनुवचनस्य सन्निधेर-भावात् अनुवाद स्वकर्तारं नोपस्थापयति । तथा च उपवीतस्य प्रकरणात् कृत्स्नदर्शपूर्णमासप्रकरणे निवेश इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :— अवान्तरप्रकरणात् उपवीतं सामिधेन्यङ्गमिति भाट्टमते पूर्वपक्षः । सामिधेनीकर्त्रैव उपव्यानकर्त्राकांक्षाया निवृत्तेः उपवीतं सामिधेन्यङ्गमिति प्रभाकरमतेन पूर्वपक्षः । उपवीतं कृत्स्नदर्शपूर्णमा-साङ्गमेवेति सिद्धान्तः । तत्र अवान्तरप्रकरणाभावात् प्रकरणे एव निवेश इति भाट्टमतम् । अनुवादस्य कर्तृपस्थापकत्वाभावात् प्रकरण एव उप-वीतस्य निवेश इति प्रभाकरमतम् ॥

---

## गुणानां मिथोऽसम्बन्धाधिकरणम्

(३–१–१२)

गुणानां च परार्थत्वादसम्बन्धस्समत्वात्स्यात् ।२२।
इदं सिद्धान्तपरं सूत्रम् ।

वैकङ्कतादिकं पात्रं किं पवमानहविष्ष्वेव विनियुज्यते अथवा दर्श-पूर्णमासादिसर्वयज्ञेषु निविशते इति संशयः । 'तस्माद्वारणो यज्ञावचरः स्यान्नत्वेतेन जुहुयात्', वैकङ्कतो यज्ञावचरः स्याज्जुहुयादेवैतेन' इति आधानप्रकरणे दारुपात्रं होमार्थं यज्ञार्थं च श्रूयते । यज्ञावचरो नाम यज्ञप्रचारहेतुरित्यर्थः । तत्र वारणवैकङ्कतादिपात्रं प्रथमं प्रकरणादाधाने

निविष्टो भवति । तत्र च प्रयोजनाभावात्तत्पात्रं पवमानहविष्षु निविशते इति पूर्वपक्षः ।

अत्र प्रकरणस्य विनियोजकत्वाभावात् न पवमानहविष्ष्वेव तत्पात्र निविशते । तद्यथा–अग्निमुद्दिश्याधान विहित, तथैव पवमानहवीष्यपि । तस्मादाधानपवमानहविषोरङ्गाङ्गिभावात् नात्र प्रकरण विनियोजकम् । तस्मात् 'वैकङ्कतो यज्ञावचर:' इति वाक्येन दर्शपूर्णमासादिसर्वक्रतुषु तद्विनियुज्यत इति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– आनर्थक्यतदङ्गाधिकरणन्यायेन आधाने निविष्ट प्राप्तं आनर्थक्यं सत् अङ्गेषु पवमानहविष्षु निविशते इति पूर्वपक्षः । प्रवृत्तित एव आधाने अग्नय: प्राप्नुवन्ति । तस्मात्पवमानहवीष्यपि प्राप्नुवन्ति । अतश्च हविषां गुणसम्बन्धाभावो ज्ञायते । अनङ्गत्वा-त्प्रकरणादुत्कृष्टस्य पात्रस्य सर्वयज्ञार्थता युक्तेति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :– आधाने आनर्थक्यं सत् अङ्गेषु पवमानहविष्षु वैकङ्क-ताविकं पात्र विनियुज्यत इति पूर्वपक्षस्समान एव । पात्र प्रति प्रकरणस्य विनियोजकत्वाभावात्, वाक्येन सर्वयज्ञेषु पात्र विनियुज्यते इति सिद्धान्त-पक्षोऽपि सम एव ।।

—:o:—

## वार्त्रघ्न्यधिकरणम्

(३–१–१३)

मिथश्चानर्थसम्बन्धात् ।२३। इदं सिद्धान्तपरं सूत्रम् ।

वार्त्रघ्नी, वृधन्वतीयुगलयोः किं आज्यभागाङ्गत्वमुत दर्शपूर्णमासाङ्गत्वं वेति संशयः । तत्र हौत्रकाण्डे आज्यभागयोः क्रमे 'अग्निर्वृत्राणि जङ्घनत्' इत्यनुवाकेन आम्नातयोः 'वार्त्रघ्नी', 'वृधन्वती' युगलयोः 'वार्त्रघ्नी पूर्णमासे अनूच्यते' 'वृधन्वती अमावास्यायाम्[1]' इति वाक्याभ्यां दर्शपूर्णमासयागाङ्गतैव, न तु आज्यभागाङ्गतेति पूर्वपक्षः ।

'अग्निर्वृत्राणि जङ्घनत्' इत्याग्नेयी प्रथमा वार्त्रघ्नी, 'त्वं सोमासि सत्पतिः' इति सौम्या द्वितीया वार्त्रघ्नी । 'अग्निः प्रत्नेन जन्मना' इत्याग्नेयी प्रथमा वृधन्वती, 'सोम गीर्भिष्ट्वावयम्' इति सौमा द्वितीया वृधन्वती[2] । तत्र मुख्ययोः दर्शपूर्णमासयोः आग्नेयपुरोडाशस्य सद्भावात् आग्नेयीद्वयस्य विकल्पेन पुरोनुवाक्यत्वं कथञ्चिद्भवतु । तथापि सोमदेवताया अभावान्न सौम्ययोस्सम्भवति, तथा च पूर्णमासी अमावास्या शब्दाभ्यां कालवाचित्वसम्भवात् 'वार्त्रघ्नी पूर्णमासे' 'वृधन्वती अमावास्यायाम्' इति ब्राह्मणवाक्याभ्यां पूर्वमप्राप्तव्यवस्था आज्यभागाङ्गत्वेन

---

1. J. N. V. P. 119
2. Ibid ,,

अभिधीयते । अतश्च वृत्रघ्नी, वृधन्वतीयुगलद्वयस्य आज्यभागाङ्गत्वमेवेति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् .– 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इत्यत्र आज्यभागपदाभावात् श्रुतं पूर्णमास अमावस्यापदं प्रधानवाचकम् । तस्मात् ऋग्द्वय पौर्णमास्यङ्गत्वेन विधीयते इति पूर्वपक्षः । विधेयमन्त्रयोग्यतानुसारेण व्यवधानेन सम्बन्धो युक्तः । तस्मात् आज्यभागाङ्गत्वेन मन्त्रविधानमिति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :- वाक्ये आज्यभागपदाश्रवणाद्धेतोः वाक्यात् दर्शपूर्णमासयागाङ्गत्वेन मन्त्रविधानमिति पूर्वपक्षस्समान एव । आग्नेयीमन्त्रयोरेव दर्शपूर्णमासयोर्विनियोक्तु शक्यते । न तु सौम्यमन्त्रयोः । अतश्च ब्राह्मणवाक्येन आज्यभागाङ्गत्वेन कालविशिष्टव्यस्थैवेति भाट्टमतम् । विधेयमन्त्रगतयोग्यतानुसारेण आज्यभागाङ्गत्वेनैव मन्त्रविधानमिति प्रभाकरमतम् ।

—:o:—

## हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम्

(३–१–१४)

आनन्तर्यमचोदना ।२४। वाक्यानां च समाप्तत्वात् ।२५।
इमे द्वेऽपि सिद्धान्तपरे सूत्रे ।

'हस्ताववने निक्ते' इत्युक्तहस्तशुद्धिः किं स्तरणमात्राङ्गमुत दर्शपूर्णमासाङ्गं वेति संशयः । तत्र 'हस्ताववने निक्ते' 'उलपराजि

स्तृणाति' इति हस्तावनेजन–उलपराजिस्तरणवाक्ययोः नैरन्तर्यप्रतीतेः हस्तशुद्धिः उलपराजिस्तरणाङ्गमेवेति पूर्वपक्षः।

'सस्कृतौ च हस्तौ सर्वानुष्ठानयोग्यौ' इत्येतादृशसामर्थ्यरूपलिङ्गात्प्रकरणाच्च दर्शपूर्णमासाङ्गमेव। तथा च लिङ्गप्रकरणाभ्या क्रमबाध इति। एवञ्च हस्तावनेजन प्रकरणाद्दर्शपूर्णमासाङ्गमेवेति भाट्टमतेन सिद्धान्त.। एवमेव 'मुष्ठी करोति' 'वाच यच्छति' इत्यत्रापि वाग्यमः ज्योतिष्टोमार्थ एवेति उदाहरणान्तरमपि।

हस्तावनेजनेन कृत्स्नप्राकरणिककर्मणि योग्यता भवति। तथा च दर्शपूर्णमासाद्यर्थतेति प्रभाकरमतम् ॥

---

## चतुर्धाकरणादीनां आग्नेयमात्राङ्गताधिकरणम्

(३–१–१५)

**शषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ।२६। इदं पूर्वपक्षपरं सूत्रम् ।**

**व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्थागुणश्रुतिः ।२७। इद सिद्धान्तपरं सूत्रम् ।**

'आग्नेय चतुर्धा करोति' 'इत्युक्तं चतुर्धाकरणं किं सर्वशेषमुत आग्नेयमात्रगत वेति सशयः। तत्र आग्नेयवदेव ऐन्द्राग्नाग्नीषोमीयपुरोडाशयोरपि आग्नेयसम्बन्धावगमात् त्रयाणामपि चतुर्धाकरण शेष इति पूर्वपक्षः।

'आग्नेयम्' इति तद्धितशब्दः देवतासम्बन्धे विधीयते । तथा च केवलोऽग्निः द्विदेवत्ययोः पुरोडाशयो र्न देवता । अतश्च द्विदेवत्यस्थले कृत्स्नदेवता मुख्या न भवतीति आग्नेये एव चतुर्धाकरणमिति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–** 'आग्नेयं चतुर्धा करोति' इत्यत्र तद्धितशब्देन पदार्थमात्रमेव उपलक्ष्यते । तथा च अग्निसम्बन्धः ऐन्द्राग्नाग्नीषोमीय-योरप्यस्तीति तत्रापि चतुर्धाकरणमेवेति पूर्वपक्षः । यथाभिधेय लक्षण-सम्भवे अयथार्थविगतिर्न युक्तेति आग्नेयस्यैव चतुर्धाकरणम्, न त्वन्यत्र इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः :–** अग्निसम्बन्धस्सर्वत्राप्यस्तीति चतुर्धाकरण सर्वशेष इति पूर्वपक्षस्समान एव । आग्नेये एव चतुर्धाकरणं, न त्वन्यत्रेति सिद्धान्तोऽपि समान एव ॥

---

इति

तृतीयाध्यायस्य प्रथमः पादः समाप्तः

## तृतीयाध्यायस्य प्रथमपादाधिकरणेषु प्रतिपादिता विषयाः

१. प्रथमाधिकरणे शेषशेषिभावस्य शाब्दत्वादयमध्याय आरम्भणीय ति निरूपितम् ।

२. द्वितीयाधिकरणे शेषलक्षणनिरूपणं कृतम् ।

३. तृतीयाधिकरणे शेषलक्ष्यनिरूपण कृतम् ।

४. निर्वापादिधर्माः व्यवस्थिता एवेति चतुर्थाधिकरणे निरूपितम् ।

५. श्रुतिवशात् स्फ्यादिद्रव्याणा व्यवस्थयैव प्राप्तिरिति पञ्चमाधिकरणे निरूपितम् ।

६. अरुणादिगुणाना असङ्कीर्णतेवेति षष्ठाधिकरणे प्रतिपादितम् ।

७. उद्देश्यगतसख्यायाः विवक्षा नास्तीति सप्तमाधिकरणे निरूपितम् ।

८ चमसादौ ससर्गो नास्तीति अष्टमाधिकरणे निरूपितम् ।

९. सप्तदशारत्निताया यूपे एव निवेश इति नवमाधिकरणे प्रतिपादितम् ।

१०. अभिक्रमणं प्रयाजकर्त्रैव सम्बध्यते इति दशमाधिकरणे निरूपितम् ।

११. उपवीतस्य कृत्स्नदर्शपूर्णमासाङ्गत्वमिति एकादशाधिकरणे निरूपितम् ।

१२. वैकङ्कतादिक पात्र स्रुवत्रयेषु निविशते इति द्वादशाधिकरणे प्रतिपादितम् :

१३. वार्त्रघ्नी वृधन्वतीयुगलद्वयस्य आज्यभागाङ्गत्वमेवेति त्रयोदशाधिकरणे प्रतिपादितम् ।

१४. हस्तावनेजनस्य प्रकरणाद्दर्शपूर्णमासाङ्गत्वमिति चतुर्दशाधिकरणे प्रतिपादितम् ।

१५. चतुर्धाकरणादीना आग्नेयाङ्गत्वमेवेति पञ्चदशाधिकरणे प्रतिपादितम् ।

इति

तृतीयाध्यायस्य प्रथमः पादः समाप्तः

—:o:—

## अथ तृतीयाध्यायस्य द्वितीयः पादः

### मुख्ये विनियोगाधिकरणम्

(३–२–१)

अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ।१। संस्कारकत्वादचोदितेन स्यात् ।२। इमे द्वे सिद्धान्तपरे सूत्रे ।

'बर्हिर्देवसदनं दामि' इत्ययं मन्त्रः किं गौणमुख्यबर्हिर्लवने विनियुज्यते उत मुख्ये एव वेति संशयः । तत्र लिङ्गेन अय मन्त्रः लवनप्रकाशकः । लवनं च मुख्यगौणभेदेन द्विविधम् । कुशकाशादिदर्भरूप मुख्यं, तदन्यद्गौणम् । अतश्च मुख्यगौणलवनयोरय मन्त्रः निविशते इति पूर्वपक्षः ।

मुख्यस्यैव शीघ्रोपस्थितेः लिङ्गं गौणप्रतीक्षा न करोति । तस्मात् मुख्ये लवने एव मन्त्रो नियम्यते इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :–लवनप्रकाशकमन्त्राणां किं मुख्याभिधेये विनियोग उत गौणेऽपीति संशयः । अविशेषादुभयत्रापि मन्त्र इति पूर्वपक्षः । शब्दस्य व्यापारः मुख्ये एव भवति । गौणे तु अर्थादेव भविष्यति । तस्मान्मुख्ये एव मन्त्रा विनियुज्यन्ते इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– गौणमुख्योभयसाधारण्येन मन्त्रा इति पूर्वपक्षः, मुख्ये एव मन्त्रा इति सिद्धान्तश्च समान एव ॥

—:o:—

## ऐन्द्र्यधिकरणम्

(३-२-२)

**वचनात्त्वेयथार्थमैन्द्री स्यात् ।३। गुणाद्वाप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात् ।४। इमे द्वे सिद्धान्त–सूत्रे एव ।**

ऐन्द्रीमन्त्रस्य किं मुख्यार्थे विनियोगः उत गौणार्थे इति संशयः । तत्र 'निवेशनः सङ्गमनः' इत्यादिरैन्द्रीमन्त्रः' । ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इतीदं तु ब्राह्मणवाक्यम् । तथा च पूर्वाधिकरणवदेव अय मन्त्रोऽपि मुख्येन्द्रप्रकाशकः । इन्द्रशब्दः मुख्यार्थे सहस्राक्षपरः । गौणार्थे ऐश्वर्य-गुणयोगेन यज्ञसाधनत्वेन वा मुख्येन्द्रसदृशपर । अतश्च मन्त्रेण प्रथम-मिन्द्रे प्रकाशिते ब्राह्मणेन विसंवादो भवति । तस्मात् गार्हपत्यशब्दस्य मुख्येन्द्रः गार्हपत्यसमीपदेशो वा लक्षणीयः । तथा च मुख्यार्थे विनियोगे विसंवादश्च न भवतीति पूर्वपक्षः ।

विधायकब्राह्मणवाक्यगत गार्हपत्यशब्देन लक्षणाङ्गीकारोऽन्याय्य इति मन्त्रगतेन्द्रशब्देन वह्निः लक्षणीयः । तथा च यावल्लिङ्गादैन्द्र्याः इन्द्रोपस्थानाङ्गत्व कल्प्यते, तावच्छ्रुत्या गार्हपत्योपस्थानाङ्गत्वं अस्य मन्त्रस्य कल्प्यते इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– ऐन्द्रीमन्त्रेण इन्द्राभिधानं कर्तव्यमुत गार्हपत्या-

भिधानं वेति संशयः । तत्र लिङ्गादयं मन्त्रः मुख्येन्द्राभिधाने एवेति पूर्वपक्षः । 'ऐन्द्र्या गार्हपत्यम्' इत्यत्र श्रुत्या मन्त्रस्य गार्हपत्योपस्थानाङ्गत्वप्रतीतेः गार्हपत्योपस्थाने एवायं मन्त्र इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– ऐन्द्रीप्रकाशकमन्त्रस्य श्रुत्या गार्हपत्योपस्थानाङ्गत्वेन विनियोग इति विषयविचार उभयमतेऽपि समान एव ।।

—:o:—

## आह्वानविनियोगाधिकरणम्

(३–२–३)

तथाह्वानमपीति चेत् ।५। इद सिद्धान्तपरं सूत्रम् ।

न कालविधिश्चोदितत्वात् ।६। गुणाभावात् ।७।
लिङ्गाच्च ।८। विधिकोपश्चोपदेशे स्यात् ।९।
इयन्ति सिद्धान्तपराणि सूत्राणि ।

हविष्कृन्मन्त्रस्य किं अवघाते विनियोगः उत आह्वाने वेति संशयः। 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इत्ययं मन्त्रः दर्शपूर्णमासयोः श्रूयते । तस्यैतस्य मन्त्रस्य 'हविष्कृदेहीत्याह य एव देवानां हविष्कृतस्तानाह्वयति' इति ब्राह्मणवाक्येन अवघाते एव ऐन्द्रीमन्त्रवत् विनियोगः । अवघ्नन् इति श्रूयमाणत्वाच्च नास्य मन्त्रस्य आह्वाने विनियोगः । तथा च प्राप्तावघातोद्देशेन मन्त्रस्य त्रित्वस्य च विधौ वाक्यभेदः । अतश्च कस्यां चिच्छाखायां अस्य मन्त्रस्य त्रिरभ्यासो दृष्ट इति त्रित्वस्य अनुवादत्वमुपपद्यते । आह्वयति पद च एहिपदवदवघातपरतयोपचरणीयमिति पूर्वपक्षः ।

त्रित्वस्य प्राप्तत्वेन अनुवादत्वमिति यदुक्तं तन्न सम्भवति । यतः त्रित्वस्य नित्यप्राप्तिरेव नास्ति । शाखान्तरेषु क्वचिद्द्विरभ्यासः, क्वचित्त्रिरभ्यासश्च पठितः । तस्मान्नित्यप्राप्तेरभावात् अनुवादत्वाभावात् नित्यवद्विधीयते । कालस्य च प्राप्तत्वात् तद्विधौ वाक्यभेदो भवति । अवघ्नन् इत्यस्य वैयर्थ्यभिया काललक्षणा क्रियते । अतश्च अवघातकाले यदाह्वान तस्य त्रिरभ्यासः कर्तव्यः । तस्मादाह्वानशेषोऽय मन्त्र इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** .– 'त्रिरघ्नन्नाह्वयति' इत्यत्र अवघ्नन्निति पदस्य अवघातकाले इति काललक्षणाभयात् 'त्रिः' इति पाक्षिकोऽनुवादः उत काललक्षणा वेति सशयः । तत्र शाखान्तरेषु क्वचित् द्विरभ्यास., क्वचित् । त्रिरभ्यासश्च दृश्यते । तस्मात् त्रिरिति पाक्षिकानुवाद एवेति पूर्वपक्षः । नित्यवदन्वितस्य त्रिरभ्यासस्य पाक्षिकानुवादत्वपक्षे अन्वयबाधो भवति । तस्मात् काललक्षणैवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– ऐन्द्रीमन्त्रवदेव अवघाते एव मन्त्रो वियुज्यते इति भाट्टमतेन पूर्वपक्षः । काललक्षणापत्तेः त्रित्वस्यानुवाद इति प्रभाकरमते पूर्वपक्षः । श्रुतेरभावात् न ऐन्द्रीन्यायः । तथा च लिङ्गेन आह्वाने एव मन्त्रविनियोग इति भाट्टमतम् । नित्यवदन्विस्य त्रित्वस्य अनुवादत्वाभावात् काललक्षणेति प्रभाकरमतम् ॥

—:o:—

## अग्निविहरणादिप्रकाशकमन्त्रविनियोगाधिकरणम्

(३–२–४)

तथोत्थानविसर्जने ।१०। इदं सिद्धान्तपरं सूत्रम् ।

अग्निविहरणादिमन्त्रौ किं विधेयौ उत काललक्षकौ वेति संशयः। तत्र 'ज्योतिष्टोमे समामनन्ति – उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहर' इति 'व्रतं कृणुतेति वाचं विसृजति' इति च। तत्र अर्थप्राप्तस्यैव कालस्य अवघातशब्दे लक्षणया उच्यते। तद्वदत्र अर्थप्राप्तकालाभावान्न पूर्वन्यायोऽत्र प्रवर्तते। अतश्च अग्निविहरणवाक्ये आग्नीध्रं सम्बोध्य अग्निविहरणादिप्रैषरूपो मन्त्रोऽनेन वाक्येन उत्थानशेषतया विनियुज्यते। तथा मुष्टिं कृत्वा नियमितवाचो दीक्षितस्य वाग्विमोके 'व्रतं कृणुत' इति मन्त्रो विनियुज्यते इति। तथा च मन्त्रौ विधेयाविति पूर्वपक्षः।

अग्निविहरणप्रैषे पयःपानरूपव्रतसादनप्रैषे च मन्त्रयोरन्वयात्, उत्थाने वाग्विमोके च मन्त्रावन्वयं न प्राप्नुवन्ति। अतश्च अगत्या असमर्थयोर्विनियोगासम्भवात् काले लक्षणामङ्गीकृत्य कालो विधीयते इति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :– पूर्वाधिकरणवदेव पूर्वोत्तरपक्षौ–अधिकाशङ्का तु–यदि लक्षणा स्यात्तदा पूर्वमप्राप्तः कालसंयोगो विधीयते। लक्षणया चात्र प्रैषस्य अन्यार्थत्वं न भवति। अतः कालविधिरिति पूर्वपक्षः।

पूर्वत्र प्रैषार्थानन्वयवदत्रापि उत्थानविसर्जनयोश्चेतनत्वात् प्रैषार्थानन्वय-एव । अतः काललक्षणैवात्रेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– मन्त्रयोर्विधिरेवेति भाट्टमतेन पूर्वपक्षः । अप्राप्तः कालसंयोग एव विधीयते इति प्रभाकरमतेन पूर्वपक्ष. । विधान नास्ति । किन्तु काललक्षणैवेति सिद्धान्तस्पमान एव ॥

—:o:—

## सूक्तवाकस्य प्रस्तरप्रहरणाङ्गताधिकरणम्

(३–२–५)

सूक्तवाके च कालविधिः परार्थत्वात् ।११।
इदं पूर्वपक्षपरं सूत्रम् ।

उपदेशो वा याज्याशब्दो हि नाकस्मात् ।१२। स देवतार्थ-स्तत्संयोगात् ।१३। प्रतिपत्तिरिति चेत् स्विष्टकृद्वदुभय-सस्कारः स्यात् ।१४।

'सूक्तवाकेन' इत्येतत्पदं काललक्षकमुत सूक्तवाकस्य प्रस्तरप्रहर-णाङ्गत्वं वेति सशयः । प्रस्तरो नाम दर्भमुष्टिः । तत्र 'इदं द्यावा-पृथिवी' इत्यादिः सूक्तवाकमन्त्रः । अग्नि सम्बुध्य 'त्वं सूक्तवागसि' इत्युक्तत्वात् दर्शपूर्णमासान्तर्गत 'सूक्तवाकेन प्रस्तर प्रहरति' इति वाक्येन सूक्तवाककाले दर्भमुष्टि प्रक्षिपति इत्यर्थो भवति । अतश्च 'सूक्तवाकेन' इत्येतत्पदं काललक्षक भवति । तथाच होता अस्मिन्मन्त्रे पठ्यमाने अध्वर्युः प्रस्तर प्रहरेदिति । तस्मान्नायं मन्त्रः प्रस्तरप्रहरणाङ्गमिति पूर्वपक्षः ।

सूक्तवाकेन इति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते। ननु प्रहरणं नाम प्रक्षेप एव न तु देवतोद्देशेन। तथा च देवताया अभावात्कथं अस्य मन्त्रस्य प्रहरणान्वय इति चेत् उच्यते। अग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या प्रहरणाङ्गत्वं बोध्यते। प्रकरणे यदि अग्न्यादि देवता भवेयु:, तदा मन्त्रस्य देवताप्रकाशनेन दृष्टोऽर्थो लभ्यते। अत: देवताकल्पनेन तदुद्देशपूर्वकस्य प्रक्षेपस्य यागत्व सिध्यति। तस्मादस्य मन्त्रस्य देवताद्वारा अन्वयसम्भवात् सूक्तवाकस्य प्रहरणाङ्गत्वमेवेति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :– सूक्तवाकस्य प्रहरणसाधकत्वाभावात् प्रहरणेन होमात्मको यागः लक्षयितव्यो भवति। तदा प्रधाने आख्यातार्थे लक्षणा अङ्गीकर्तव्या स्यात्। तस्मात्सूक्तवाकेन कालो लक्ष्यत इति पूर्वपक्षः। नात्र प्रहरणस्य यागलक्षणा। यतः प्रहरणं च होमरूपे यागे एवेति अर्थात्प्राप्तिरेव भवति। तस्मात्सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वमेवेति प्रभाकरमतेन सिद्धान्तः।

मतभेदः – काललक्षणैवेति पूर्वपक्षः। तत्र मन्त्रस्य प्रस्तरणे विनियोक्तुमशक्यत्वात् 'सूक्तवाकेन' इत्येतत्पदं काललक्षकमिति भाट्टमते। प्रधाने आख्याते लक्षणापेक्षया काललक्षणैव 'सूक्तवाकेन' इत्यत्र क्रियते इति प्रभाकरमते। सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वमेवेति सिद्धान्तस्समान एव।।

—:o:—

## सूक्तवाकानामर्थानुसरणेन विनियोगाधिकरणम्

(३-२-६)

कृत्स्नोपदेशादुभयत्र सर्ववचनम् ।१५।
इद पूर्वपक्षपरम् ।

यथार्थं वा शेषभूतसंस्कारात् ।१६। वचनादिति चेत् ।१७।
प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ।२८। इमानि
सिद्धान्तपराणि ।

पूर्वाधिकरणोक्तमन्त्र एव अस्मिन्नधिकरणे उदाहरणम् । प्रहरणे सर्वोऽपि सूक्तवाकमन्त्रः विनियुज्यते, अथवा मन्त्रस्य विभज्य विनियोगो वेति संशयः । सूक्तवाकसमाख्यया कृत्स्नमन्त्रविषयता अस्ति । याज्ञिकैश्च कृत्स्ने एव मन्त्रशब्दप्रयोगः क्रियते । तथा च समाख्यावशाद्याज्ञिकप्रयोगाच्च सर्वोऽपि मन्त्रः प्रहरणाङ्गमेवेति पूर्वपक्षः ।

समाख्यायाः लिङ्गेन बाधात् मन्त्रः विभज्यैव विनियुज्यते । तद्यथा .— तस्मिन्सूक्तवाकमन्त्रे 'अग्नीषोमाविदं हविरजुषेताम्' इत्यस्मिन् भागे पूर्णमासदेवताम्नानं वर्तते । 'इन्द्राग्नी इदं हविरजुषेताम्' इत्यस्मिन् भागान्तरे दर्शपूर्णमासदेवताम्नानं इत्यादि वर्तते । अतश्च समाख्यापेक्षया लिङ्गस्य प्रबलत्वात् अस्य मन्त्रस्य विभज्यैव विनियोगः, सूक्तवाकशब्दश्च 'सूक्त वक्ति' इति यौगिकव्युत्पत्त्या भागे अन्वेति । अतश्च मन्त्रस्य विभज्यैव विनियोग इति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– कृत्स्नमन्त्रे एव लोके 'सूक्तवाक' इति व्यवहार-दर्शनात् सर्वोऽप्ययं मन्त्रः दर्शपूर्णमासे च विनियुज्यते इति पूर्वपक्षः । सूक्तं वक्ति इति व्युत्पत्तौ सूक्तशब्दस्य वाक्यमित्यर्थः । न तावत् वाक्यानां समूहः वाक्येनोच्यते । तस्मात् विभज्यैव विनियोग इति प्रभाकरमतेन सिद्धान्तः । समुदायाभिप्रायस्तूद्देश्यतया उपन्यस्त इति प्रभाकर उक्तवान्[1]।

**मतभेदः** :– सर्वोऽपि मन्त्रः प्रहरणे एवेति भाट्टमते पूर्वपक्षः । दर्शपूर्णमासे च सर्वोऽपि मन्त्रः इति प्रभाकरमतेन पूर्वपक्षः । देवतापद–विभागेन मन्त्रः विभज्यैवेति सिद्धान्तस्समान एव ।।

---

## काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गताधिकरणम्

(३–२–७)

ङगक्रलिमकसमाख्यानात्काम्ययुक्तं समाम्नानम् ।।१९।

इद सिद्धान्तपरं सूत्रम् ।

काम्यनित्ययोरुभयत्र काम्ययाज्यानुवाक्याना प्राप्तिः उत काम्य-मात्राङ्गत्वमेव वेति संशयः । तत्र कम्येष्टिकाण्डे 'ऐन्द्राग्नमेकादशकपाल निर्वपेत् यस्य सजातावीयुः' इत्यादयः काम्येष्टय. समाख्याता । तथैव मन्त्रकाण्डे याज्यानुवाक्या अपि क्रमेणैवाम्नाताः । तत्र 'काम्ययाज्यानु-वाक्याकण्डम्' इति याज्ञिकाना समाख्यापि वर्तते । तदा क्रमवशादेव

---

1. बृहती P. 729 (3-2-6)

प्रथमकाम्येष्टे. प्रथमयाज्यानुवाक्या इति सिद्ध्यति । किन्तु प्रथमकाम्येष्टौ ऐन्द्राग्नलिङ्गवशेन प्रथमयाज्यानुवाक्यं नित्यकाम्योभयेष्ट्यङ्गत्वेन विधीयते । क्रमस्य लिङ्गेन बाधात् इति पूर्वपक्षः ।

उपजीव्यत्वाल्लिङ्गेन क्रमसमाख्ययोर्बाधो नास्ति । लिङ्गत्व इन्द्राग्निदेवतास्वरूपप्रकाशनमात्रपरमेव । तेन च मन्त्रकर्मणोर्नाङ्गाङ्गि-भावसम्बन्धो नावगम्यते । किन्तु समाख्यावशाद्यथा मन्त्रकाण्डकर्मकाण्ड-योस्सम्बन्धावगतिर्भवति, तथा मन्त्रकर्मणोरपि सामान्यसम्बन्धोऽवगम्यते । ततश्चास्मिन् प्रथमे कर्मणि अय प्रथमो मन्त्र: इति विशेषसम्बन्धोऽ वगम्यते । यद्यप्यत्र क्रमसमाख्याभ्यामेव विनियोग:, तथापि लिङ्गस्योप-जीव्यत्वान्न क्रमादिबाधक: । अत्र तु यद्यपि लिङ्गमप्रयोजक तथापि क्वचिल्लिङ्गस्यापि व्यवस्थापकत्वमस्ति । तस्मात् काम्ययाज्यानुवाक्याना काम्येष्टिमात्राङ्गत्वमेवेति भाट्टमतेन सिद्धान्त ।

प्रभाकरमतम् :– लिङ्गमपि श्रुत्यादिवदेव निरपेक्ष विनियोजक भवति । क्रमापेक्षया लिङ्गस्य प्राबल्यात् लिङ्गात् काम्ययाज्यानुवाक्यानां सर्वत्र विनियोग इति पूर्वपक्ष: ।

सामान्यसम्बन्धे सति विशेषापेक्षायां लिङ्गविनियोजक भवति । अत्र तु समाख्याया परस्परसम्बन्धेऽवगते लिङ्गयाज्यानुवाक्यै मन्त्र. विनियो-जयति इति प्रभाकरमते सिद्धान्त. ।

मतभेद: :– क्रमसमाख्यापेक्षया लिङ्गस्य प्राबल्यात् लिङ्गादेव काम्येष्टियाज्याया काम्यनित्येषु प्राप्तिरिति पूर्वपक्षः । तत्र क्रमसमा–ख्यापेक्षया लिङ्गस्यैव प्राबल्याल्लिङ्गाद्विनियोग इति भाट्टमते । लिङ्गं निरपेक्ष प्रमाणमिति लिङ्गादेव विनियोग इति प्रभाकरमते । उपजी-व्यत्वान्न लिङ्गाद्विनियोग इति भाट्टमतम् । लिङ्गक्रमाभ्यामेव परस्पर-सम्बन्धे सति लिङ्ग विनियोजकमिति प्रभाकरमतम् ।।

—:o:—

## आग्नीध्रोपस्थाने प्रकृतानां मन्त्रणां विनियोगाधिकरणम्

(३-२-८)

अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ।२०।
इद सिद्धान्तपर सूत्रम् ।

तदाख्यो वा प्रकरणोपपत्तिभ्याम् ।२१। अनार्थकश्चोपदेशः स्यादसम्बन्धात्फलवता ।२२। सर्वेषां चोपदिष्टत्वात् ।२३। इयन्ति पूर्वपक्षपराणि सूत्राणि ।

उपस्थाने अखिलाः ऋचः प्रयोक्तव्याः उत प्राकृता एव वा इति संशयः। तत्र 'आग्नेय्यमाग्नीध्रमुपतिष्ठते' इति ज्योतिष्टोमे श्रूयते । तत्र आग्नीध्रनामकस्य मण्डपस्य यदुपस्थापन तत् दाशतयीसम्बन्धिन्या यया कयाचिदृचा कर्तव्यम् । 'अग्निर्देवता यस्य ऋचः सा आग्नेयी'[1] इति व्युत्पत्त्या साधारणी ऋगेव प्रतीयते । अतः यया कयाचिदृचा उपस्थानं कर्तव्यमिति पूर्वपक्षः ।

ऋतुप्रकरणपठितानां आग्नेयीना ऋचां प्रकरणात् ऋतुप्रयुक्त व्यापारसाधनत्वमवगम्यते । व्यापारविशेषापेक्षाया 'आग्नीध्रोपस्थापनम्'

1. J. N. V P. 128

अनेन वाक्येन बोध्यते । अतश्च प्रकृताग्नेयीऋचामेव आग्नीध्रोपस्थाना-ङ्गत्वमिति । तथा च अप्रकृतानां ऋचां तु क्रतुप्रयुक्तव्यापारसाधनत्वं तद्व्यापारविशेषश्च इति उभयकल्पनं गौरवाय भवति । अतश्च क्रतुप्रयु-क्तव्यापारसाधनत्वस्य आग्नेयीना ऋचां सिद्धत्वात् विधिः विशेषे एव संक्रामतीति लाघवम् । तस्मात् प्राकृतऋग्भिरेव आग्नीध्रमण्डपोप-स्थापनं भावयेदिति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– 'आग्नेय्याग्नीध्रमुपतिष्टते' इत्येवमादिषु याव-ल्लिङ्गा ग्रहीतव्या उत प्रकृतानामेव ग्रहणमिति सशयः । तत्र विधेयस्य प्रकृताभिधानसामर्थ्य नास्तीति मन्वानः पूर्वपक्षी यावल्लिङ्गा ग्रहीतव्या इति पूर्वपक्षः । विधेयस्य प्राकृतस्य त्यागे प्रमाणाभावात् प्रकृताभिधान-सामर्थ्यमस्त्येव । अतश्च प्राकृतऋग्भिरेव आग्नीध्रोपस्थापन भावये-दिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– अग्निर्देवता यस्य ऋचः सा आग्नेयी इति व्युत्पत्त्या यया कयाचिदृचा आग्नीध्रोपस्थापनं भावयेदिति भाट्टमतेन पूर्वपक्षः । विधेयस्य प्रकृताभिधानयोग्यताभावात् अप्राकृतैरपि आग्नीध्रोपस्थानं भावयेदिति प्रभाकरमते पूर्वपक्षः । अप्राकृतऋग्ग्रहणे सम्बन्धगौरवमिति प्राकृतऋग्भिरेव आग्नीध्रोपस्थान भावयेदिति भाट्टमतम् । विधेयस्य प्रकृताभिधानपरित्यागे प्रमाणाभावात् प्रकृतऋग्भिरेवेति प्रभाकर–मतम् ।।

—:o:—

## भक्षणमन्त्राणां यथालिङ्ग ग्रहणादौ विनियोगाधिकरणम्

(३-२-९)

लिङ्गसमाख्याभ्या भक्षार्थतानुवाकस्य ।२४।
इदं पूर्वपक्षपर सूत्रम् ।

तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ।२५।
इद सिद्धान्तपरं सूत्रम् ।

भक्षमन्त्रः किं भक्षमात्रविषयः उत ग्रहणादौ यथायोग विनियुज्यते वेति संशयः । ज्योतिष्टोमे हुतस्य सोमस्य शेषभक्षणं विहितम् । अत एव अम्नातं 'अभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयति' इति । तस्मिन् भक्षणे ग्रहणावेक्षण निगरण सम्यग्जरणरूप– श्चत्वारो व्यापाराः सन्ति । 'भक्षे हि' इत्याद्यनुवाके मन्त्रश्च समा– ख्यातः । तत्र यथा भक्षण साक्षाच्चोदितं, न तथा ग्रहणादयः । तस्मात् 'भक्षानुवाकः' इति समाख्यावशाच्च सर्वोऽपि मन्त्रः भक्षणे एव विनियुज्यत इति पूर्वपक्षः ।

यद्यपि ग्रहणानि अविहितानि, तथापि ग्रहणाद्यन्तरेण भक्षण न न सम्भवतीति तानि अर्थाक्षिप्तानि । अतश्च तेषु भक्षानुवाकः लिङ्गा-

यथायोग्यं विनियुज्यते । तस्मात् लिङ्गेन समाख्यां बाधित्वा मन्त्रस्य विनियोग इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– 'भक्षानुवाकम्' इति समाख्यया सामान्य-सम्बन्धे अवगते कृत्स्नभक्षणे अयं सर्वोऽपि मन्त्रः इति लिङ्गादवगम्यते : अतश्च ग्रहणादिविशिष्ट भक्षणे अयं कृत्स्नमन्त्र इति पूर्वपक्षः । गहणा-दिप्रकाशकानां अन्यपरत्वे प्रमाणाभावात्, समाख्यया सम्बन्धे सति लिङ्गादेव सर्वोऽपि मन्त्र विभज्यैव विनियुज्यते इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– समाख्यया सर्वोऽपि मन्त्रः भक्षणे एवेति भाट्टमते पूर्वपक्ष. । ग्रहणादिविशिष्टभक्षणे मन्त्रविनियोग इति प्रभाकरमते पूर्वपक्षः । लिङ्गापेक्षया समाख्याया दुर्बलत्वात् लिङ्गेनैव विभज्य विनियोग इति भाट्टमतम् । समाख्यया सम्बन्धे सिद्धे लिङ्गादेव मन्त्रस्य विभज्य विनियोग इति प्रभाकरमतम् ।।

—:o:—

## मन्द्राभिभूतिरित्यादेरेकमन्त्रताधिकरणम्

(३–२–१०)

गुणाभिधानान्मन्द्रादिरेकमन्त्र. स्यात्तयोरेकार्थसंयोगात् ।२६।
इदं सिद्धान्तपर सूत्रम् ।

तृप्तिभक्षणप्रकाशकमन्त्रयोः विभज्य विनियोगः उत सर्वोऽपि मन्त्र. भक्षणे एव वेति संशयः । 'मन्द्राभिभूति' इत्यारभ्य 'जुषाणा सोमस्य

तृप्यतु' इत्यन्तो भागः तृप्तिप्रकाशकः। 'वसुमद्‌गुणस्य' इत्यारभ्य 'भक्षयामि' इत्यन्तो भागः भक्षणप्रकाशकः। तत्र द्वयोर्मन्त्रयोः पूर्ववदेव लिङ्गाद्विनियोग इति पूर्वपक्षः।

तृप्तिश्च भक्षानुनिष्पादिनी, अतश्च भक्षणमन्तरा तृप्तिर्न जायते। तस्मात् तृप्तिमन्त्रस्य व्यापारापेक्षायां लिङ्गेन विनियोगासम्भवात् भक्षण-वाक्यस्य तृप्तिप्रकाशकभागो भविष्यति। अतश्च 'मन्द्राभिभूतिः' इत्यादि-स्सर्वोऽपि मन्त्रः भक्षणे एव विनियुज्यते इति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** – पूर्वाधिकरणवदेव तृप्तिप्रकाशन, भक्षण प्रकाश-कमन्त्रयोः लिङ्गादेव विभज्य विनियोग इति पूर्वपक्षः। अननुष्ठेयस्य स्मरणानर्हत्वात् तात्पर्याभावात् समाख्यया अस्य भक्षणे एव विनियोग। न च तृप्तिस्मरण। अदृष्टकल्पनापेक्षया लक्षणाया एव युक्तत्वादिति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– द्वयोर्मन्त्रयोः लिङ्गाद्विभज्य विनियोग इति पूर्वपक्षः समान एव। सर्वोऽपि मन्त्रः भक्षणे एवेति भाट्टमतम्। समाख्यावशा-देव भक्षणेऽयं मन्त्र इति प्रभाकरमतम्॥

—:o:—

## इन्द्रपीतस्येत्यादिमन्त्राणां विनियोगाधिकरणम्

(३–२–११)

लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्र–त्वम्।२७। इद पूर्वपक्षपरं सूत्रम्।

यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ।२८।
इदं सिद्धान्तपरं सूत्रम् ।

'इन्द्रपीतस्य' इत्यादिमन्त्रस्य केवलैन्द्रके शेषभक्षणे एव विनियोगः उत ऊहेन विनियोग. अथवा सर्वत्रानूहेन वा इति त्रिधा संशयः । भक्षण-मन्त्रे 'इन्द्रपीतस्य' इत्येवंविधः कश्चिदंश. श्रूयते । 'इन्द्रेण पीतस्य सोमस्य शेषं भक्षयामः 'इत्यर्थावगमात् इन्द्रप्रदानशेषभक्षणे एव मन्त्रो विधीयते । अतश्च मैत्रावरुणादिशेषभक्षणं अमन्त्रकमे एवेति प्रथमः पक्षः ।

'अग्नये जुष्टम्' इत्यत्र 'सूर्याय' इति ऊहवदेव अत्रापि 'इन्द्रपीतस्य' इत्यत्र 'मित्रावरुणपीतस्य' इत्येवमूहेन मन्त्रस्तत्रापि विनियुज्यते इति द्वितीयः पक्षः ।

इन्द्रपीतशब्दस्य तत्पुरुषत्वे 'समासस्य'[1] इति पाणिनि सूत्रेण अन्तोदात्तत्वप्रसङ्गः । पदे तु आद्युदात्तत्व श्रूयते । एव च बहुव्रीहि-रेवात्र । तथा च 'बहुव्रीहौ प्रकृत्या पूर्वपदम्[2]' इति सूत्रेण आद्युदात्तत्वं बहुव्रीहौ भवति । तथा च 'इन्द्रपीत' पद आद्युदात्त भवति । अतश्च 'इन्द्रेण पीतः सोम. यस्मिन्नवने' इति विग्रहे सर्वदेवताशेषभक्षणेष्वयं मन्त्रो भवति । तस्मात् नायं मन्त्रः ऐन्द्रभक्षणे एवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– 'इन्द्रपीतस्य' इत्यत्र तत्पुरुषपक्षे ऐन्द्रे एव समन्त्रक भक्षणं, इतरेषान्तु उपदेशतः मन्त्रो नास्ति। अतश्च सर्वप्रदानानां समानविधानत्वात् ऊहस्यापि असम्भव इत्युक्त्वा, इह पानोपलक्षणप्रकरणे

---

1. पाणिनि सूत्रेषु — 6-1-223
2. Ibid. — 6-2-1)

समानविधे स्थिते 'अनुष्टुप्छन्दसः' इति नमनदर्शनात् 'ऐन्द्र स्सोमो गृह्यते मीयते' इति प्रकृतिविकारशङ्कायां कृत्वाचिन्ता इति। अस्य अधिकरणस्य उत्तरन्तु पादान्ते वर्तते। कुत इति चेत्-मध्येकृत्वाचिन्ता विषयाधिकरणा निवर्तन्ते। अतश्च पादान्ते उत्तर प्रभाकरेण प्रतिपादितम्।

**मतभेदः** :—इन्द्रपीतशब्दे आद्युदात्तत्वश्रवणात् बहुव्रीहिरेव गृह्यते। न तत्पुरुष इति भाट्टमतम्। प्रकृतिविकाराशङ्कायां कृत्वा चिन्ताधिकरणं प्रभाकरमते॥

---

## अभ्युन्नीतसोमलक्षणाधिकरणम्

(३–२–१२)

पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ।२९।

अपनयाद्वा पूर्वस्यानुपलक्षणम् ।३०।

इमे द्वे पूर्वपक्षपरे सूत्रे।

ग्रहणाद्वापनयः स्यात् ।३१। इदं सिद्धान्तपरं सूत्रम्।

पूर्वाधिकरणे द्वितीयपक्षे ऊहः कर्तव्य इत्युक्तम्। तत्प्रसङ्गादितः पर अधिकरणपञ्चके ऊहोऽस्ति नवेति विचार्यते। तत्र मित्रावरुणादिभिस्सह इन्द्रः उपलक्षणीयो न वेति संशयः। मित्रावरुणब्राह्मणाच्छंसि–पोतादयो ऋत्विजो होत्रकाः। तेषा चमसैः वषट्कारानुवषट्कारयोः होतव्यम्। अतश्च चमसाना ऐन्द्रत्वात् प्रथमं होतुर्वषट्कारे इन्द्रो देवता

अस्ति । ततश्च चमसस्थिते हुतशेषे पुनश्शेषान्तरमभ्युन्नीय देवतान्तरेभ्यो होत्रकाः क्रमेण समन्त्रकं जुह्वति । तस्मात् शेषभक्षणसमये पूर्वमेव इन्द्रदेवतासम्बन्धोऽ पगत इति मित्रावरुणादिभिस्सह इन्द्रो नोपलक्षणीय इति पूर्वपक्षः ।

योऽयं मित्रावरुणादिसम्बद्धः हुतशेषः, तस्यापि पूर्वसिद्धसम्बद्धाव–गमात् तस्मादुन्नीतो मित्रावरुणादिसम्बद्धशेषः इन्द्रसम्बद्ध एव भवति । एवञ्च उभयभक्षणे मित्रावरुणादिभिस्सह इन्द्रोऽप्युपलक्षणीय इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–** पूर्ववदेव पूर्वपक्ष. । देवतासम्बन्धः द्रव्यस्य ग्रहणेनैवोपपद्यते । देवतान्तरोद्देशेनाग्रहणात् न देवतान्तरोद्देशेन गृह्यते, अतश्च पूर्वदेवतासम्बन्धानपायात् इन्द्रोऽपि लक्षणीय एवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः :–** अस्मिन्नधिकरणे भाट्टप्राभाकरयोर्मतभेदो नास्ति ॥

—:o:—

## पात्नीवतभक्षणे इन्द्रादीनां अनुपलक्षणाधिकरणम्

(३–२–१३)

पात्नीवते तु पूर्ववत् ।३२।
इदं पूवपक्षपरं सूत्रम् ।

ग्रहणाद्वापनीतं स्यात् ।३३।
इदं सिद्धान्तपरं सूत्रम् ।

ऐन्द्रवायवादयो द्विदेवत्याः कि पात्नीवतभक्षणे उपलक्षणीया न वेति संशयः । तत्र द्विदेवत्यानां ऐन्द्रवायवादीनां शेषः आदित्यस्थालीमागच्छति । पुनरपि तस्याः स्थाल्याः आग्रयणस्थालीमागच्छति । तस्याः स्थाल्याः पात्नीवतो गृह्यते । तथा च पूर्वाधिकरणवदेव पात्नीवतभक्षणेऽपि इन्द्रवायवादिदेवता उपलक्षणीया एवेति पूर्वपक्षः ।

'यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति' इत्यत्र आग्रयण–शब्दोत्तर अपादानत्वश्रवणात् । यदा आग्रयणात् सोमरसः पात्नीवतमागच्छति तदा आग्रयणसम्बन्धोऽपि अपेतो भवति । तस्मात् पूर्वदेवता-सम्बन्धस्यापेतत्वात् पूर्वद्विदेवत्या अपि नोपलक्ष्यन्ते । मैत्रावरुणोदाहरण-स्थले सम्बन्धोऽनपेत इति तत्र इन्द्रः उपलक्ष्यते नात्र देवतोपलक्षणमिति पूर्वाधिकरणाद्विशेष इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– पूर्वाधिकरणसिद्धान्तवदेव पात्नीवतेऽपि द्विदेवत्य-देवतोपलक्षणमेवेति पूर्वपक्षः । 'आग्रयणात्' इत्यत्र अपादानत्वश्रवणेन पूर्वोक्तदेवता सम्बन्धोऽपेतो भवति । ततश्च द्विदेवत्यदेवतोपलक्षणं नास्तीति प्रभाकरमतेन सिद्धान्तः । इदमधिकरण पूर्वाधिकरणव्यति–रेकाधिकरणम् ।

**मतभेदः** :– अस्मिन्नप्यधिकरणे मतभेदो नास्ति ।

—:o:—

## पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणीयताधिकरणम्

(३–२–१४)

त्वष्टारन्तूपलक्षयेत् पानात् ।३४। इदं पूर्वपक्षपरं सूत्रम् ।

अतुल्यत्वात्तु नैवं स्यात् ।३५। इदं सिद्धान्तपरं सूत्रम् ।

पात्नीवतशेषभक्षणे पत्नीवता सह त्वष्टा उपलक्ष्यते न वेति संशयः। तत्र 'अग्नाई पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोम पिब स्वाहा'[1] इत्यस्मिन् मन्त्रे पत्नीवतं देव प्लुतान्तेन सम्बोध्य त्वष्ट्रा देवेन सह पिब इत्यभिधानात् पात्नीवत इव त्वष्टुरपि देवतात्वप्रतीतेः। तत्र त्वष्टापि उपलक्षणीय एवेति पूर्वपक्षः ।

'सजूः' इति पदेन पानकाले त्वष्टुः पत्नीवता सह अवस्थानमात्र–मेव प्रतीयते । न तु पानमात्रम् । अपि च यदि त्वष्टुः सम्बोधन स्यात्तदा पिब इत्यनेन सामानाधिकरण्यात् पातृत्वं भवेत्, किन्वत्र त्वष्टुः सम्बोधनं नास्ति । अपि च 'पत्नीवतमाग्रयणाद्गृह्यते' इत्यत्र त्वष्टुर–प्रतीतेश्च न त्वष्टुः पानं सम्भवति । तस्मात् त्वष्टा नोपलक्षणीय इति भाट्टमतेन सिद्धान्तः ।

---

1. J. N. V. P. 133

प्रभाकरमतम् :– 'सहार्थकस्य सजूश्शब्दस्य श्रवणात् त्वष्टुरपि अनुप्रवेशो दृश्यते। तथा च त्वष्टापि उपलक्षणीय इति पूर्वपक्षः। मन्त्रस्तु देवतां चोदितुं न शक्नोति। अतश्च त्वष्टृदेवता न चोदिता इति त्वष्टा नोपलक्षणीय इति प्रभाकरमतेन सिद्धान्तः।

मतभेदः :– त्वष्टुरपि पत्नीवत इव देवतात्वप्रतीतेः त्वष्टाप्युपलक्षणीय इति भाट्टमते पूर्वपक्षः। पत्नेः त्वष्टुरपि सहश्रवणात् त्वष्टाप्युपलक्षणीय इति प्रभाकरमते पूर्वपक्षः। त्वष्टुस्सहावस्थानमेव श्रुतम्, न तु सहपानत्वम्। अपि च देवतात्वाभावाच्च देवता नोपलक्षणीय इति भाट्टमतम्। देवतात्वाभावादेव नोपलक्षणीय इति प्रभाकरमतम्॥

—:o:—

## पात्नीवतशेषभक्षणे त्रिंशतामनुपलक्षणाधिकरणम्

(३–१–१५)

त्रिंशच्च परार्थत्वात्॥३६॥ इदं सिद्धान्तपरं सूत्रम्।

पत्नीवन्नामकाः त्रयस्त्रिंशद्देवता अपि भक्षणे उपलक्षणीया न वेति संशयः। तत्र 'पत्नीवन्नास्त्रिंशतं त्रींश्चदेवाननुष्वधमावह मादयस्व[1]' इत्यनेन मन्त्रेण 'पत्नीवन्नामधारिण त्रयस्त्रिंशद्देवान्मादय' इत्यभिधीयते।

---

1. J. N. V. P 134

अतश्च हूयमानेन सोमरसेन मादनीयत्वात् त्रयस्त्रिंशतामपि देवतात्वं भवति । अतश्च तेऽपि भक्षणे उपलक्षणीया इति पूर्वपक्षः ।

यजमानस्तु अग्निमेव मादयति । अग्निना देवा माद्यन्ते । तस्मादत्र अग्नेरेव देवतात्व न तु त्रयस्त्रिंशद्देवानाम् । तस्मात्ते देवाः नोपलक्षणीया इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– मन्त्रवर्णात् त्रयस्त्रिंशद्देवता अपि अग्निदत्तेन माद्यन्ति इति पातृत्वदर्शनात् ते उपलक्षणीया इति पूर्वपक्ष । अग्निदत्तेन ते माद्यन्ति । अतश्च अग्नेरेव प्राधान्यात् देवतात्वम् । न तेषां देवतात्वमिति ते नोलक्षणीयाः भक्षणे इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– हूयमानेन सोमरसेन मादनीयत्वात् देवतात्व भवतीति तेऽपि भक्षणे उपलक्षणीया इति भाट्टमते पूर्वपक्षः । मन्त्रवर्णादेव पातृत्वदर्शनात् ते देवा उपलक्षणीया इति प्रभाकरमते पूर्वपक्षः । अग्नेरेव देवतात्व, न त्रयस्त्रिंशद्देवानां, अतश्च ते नोपलक्षणीया इति उभयमत–सिद्धान्तः ।

——

## भक्षणे अनुवषट्कारदेवताया– अनुपलक्षणाधिकरणम्

(३–२–१६)

वषट्कारश्च कर्तृवत् ।३७। इदं सिद्धान्तपरं सूत्रम् ।

भक्षणे अनुवषट्कारदेवता उपलक्षणीया न वेति संशयः ।

'सोमस्याग्रे व्रीहीन्यनुयजति[1]' इत्यस्मिन् अग्नि सम्बोध्य सोमपातृत्वस्य विधानात् अत्र अग्निरुपलक्ष्यते ततश्च अग्निरूपानुवषट्कारदेवतापि भक्षणे उपलक्षणीयैवेति पूर्वपक्षः। प्रकृते ऐन्द्रचमसस्थले इन्द्रस्यैवोद्देश्यत्वमस्ति, नाग्नेः। अतश्च प्रकृते अग्निरनुपलक्षित इति विकृतावपि उद्देश्यदेवानामेव उपलक्षणस्य युक्तत्वात् अग्नेरुद्देश्यत्वाभावाच्च अग्निः नोपलक्ष्यते। अतश्च भक्षणे अनुवषट्कारदेवता नोपलक्षणीय इति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :— देवतात्वात् अनुवषट्कारदेवताप्युपलक्षणीय इति पूर्वपक्ष.। अनुवषट्कारदेवतोद्देश्येन सोमो न गृहीतः। अतश्च भक्षणे अनुवषट्कारदेवता नोपलक्ष्यत इति प्रभाकरमतेन सिद्धान्तः।

मतभेदः :— अग्नि सम्बोध्य सोमपातृत्वविधानात् अनुवषट्कारदेवता अग्निरपि उपलक्षणीय इति भाट्टमते पूर्वपक्षः। देवतात्वादग्निरपि उपलक्षणीय इति प्रभाकरमते पूर्वपक्षः। अनुवषट्कारदेवतोद्देशेन सोमस्य ग्रहणात् नाग्निरुपलक्षणीय इति उभयमतसिद्धान्तः।

एतेषु पञ्चस्वधिकरणेषु ये विषयाः भाट्टमतेन प्रतिपादिताः तत्र प्रभाकरः सर्वानपि विषयान् स्वमतानुसार एकस्मिन्नेवाधिकरणे उपन्यस्तवान्। तथापि 'बृहत्याः' ऋजुविमलाख्यव्याख्याने[2] एते विषयाः अधिकरणान्तरेषु प्रतिपादिताः। अतश्च विषयग्रहणसौलभ्याय अधिकरणान्तररूपेणैव प्रभाकरमतमत्र उपन्यस्तम्। एवञ्च प्रसङ्गादुहविचारः कृत इति।

—:o:—

---

1. J. N. V. P. 135
2. बृहती P. 743-744

## अनैन्द्राणाममन्त्रकभक्षणाधिकरणम्

(३-२-१७)

छन्दः प्रतिषेधस्तु सर्वगामित्वात् ।३८।

इदं सिद्धान्तपरं सूत्रम् ।

प्रसङ्गादूहविचारानन्तर 'अनैन्द्राणाममन्त्रक भक्षणं' इत्येव यः प्रथमः पूर्वपक्षः अस्मिन्नेव पादे एकादशाधिकरणे आसीत्, तमेव मनसि निधाय पुनः कृत्वाचिन्ताना त्रयमभिधीयते । तत्र अनैन्द्राणां विकृतित्वेन ऊहसम्भवात् अस्त्येव ऊह इति पूर्वपक्षः ।

'सोमेन यजेत' इत्युत्पत्तिश्रुतः सोमः कर्मणोङ्गम् । न तु प्रदान-विशेषस्य । स एव सोमः सर्वप्रदानेषु अभ्यस्यते इति सर्वाणि प्रदानानि समप्रधानान्येव । अतश्च ऐन्द्राणामनैन्द्राणा प्रकृतिविकृतिभावासम्भवात् नात्र ऊहः । तस्मादनैन्द्रस्थले विकृतित्वाभावान्नास्त्यूहः । तथा च अनैन्द्रेष्वमन्त्रक भक्षणमेवेति भाट्टमतेन सिद्धान्तः ।

एकयागत्वात्तु समानविधानम् । तस्मादैन्द्रमेव समन्त्रकं, इतरद-नाम्नानात् अमन्त्रकमेव'' इति इदमधिकरणमपि प्रभाकरमते पूर्वाधिकरणे एवान्तर्भवति ।।

---

1. बृहती P. 744

## ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम्

(२-३-१८)

ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ।३९।

इदं पूर्वपक्षपरं सूत्रम् ।

एकस्मिन् वा देवतान्तराद्विभागवत् ।४०।

इदं सिद्धान्तसूत्रम् ।

ऐन्द्राग्नभक्षणं किं समन्त्रकं अमन्त्रक वेति संशयः । तत्र 'ऐन्द्राग्नं गृह्णाति' इत्यनेन शेषभक्षणं विहितम् । तत्र इन्द्राग्निपदाभ्यां पीतः सोमः इन्द्रपीतो भवति । तथा च लिङ्गेन विनियोगात् समन्त्रकमेव भक्षणमिति पूर्वपक्षः ।

अशरीरस्य इन्द्रस्य पानं न सम्भवति । यजमानोऽपि केवलेन्द्र–मुद्दिश्य न ददौ, किन्तु इन्द्राग्नी उद्दिश्य । अतश्च दानस्य मिश्रविषय-त्वात् मन्त्रस्य च अमिश्रविषयत्वात् ऐन्द्राग्नस्थले अमन्त्रकं भक्षणमेवेति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–** इन्द्रस्य पाने प्रमाणाभावात् विग्रहवत्तादि निराकरणाच्च देवतात्वेनैवोपलक्षणमिति प्रभाकरमतम् ।।

—:o:—

## गायत्रछन्दसः इत्यादिमन्त्रविनियोगाधिकरणम्

(३-१-१९)

छन्दश्च देवतात्वात् ।४१।
इदं पूर्वपक्षपरं सूत्रम् ।

सर्वेषु वा अभावादेकच्छन्दसः ।४२।
इदं सिद्धान्त सूत्रम् ।

ऐन्द्रे सोमे च मन्त्रविनियोगः उत ऐन्द्रे एव वा इति संशयः । तस्मिन्नेव भक्षमन्त्रे 'गायत्रच्छन्द्रसः इन्द्रपीतस्य' इति श्रूयते । तत्र गायत्रमेव छन्दो यस्य इति मन्त्रपदे समासाभिधानात् एकच्छन्दोयुक्तैन्द्रे सोमे च भक्षमन्त्र इति पूर्वपक्षः ।

पूर्वोक्तविग्रहवाक्ये एवकारं परित्यज्यापि 'गायत्र छन्दः' इति विग्रहवाक्यसम्भवात्, बहुछन्दोयुक्तेऽपि बहुव्रीहिस्समान एव । अतश्च नानाछन्दस्के सौमैन्द्रप्रदाने एव मन्त्रो विनियुज्यते नान्यत्र इत्येवं गायत्रच्छन्दसः इत्यादिमन्त्रविनियोगो भवति । तदेवं अनैन्द्राणाममन्त्रकं भक्षणमिति पूर्वपक्षे स्थित्वा अधिकरणत्रये विचारः कृतः । द्विविध क्त्वाचिन्तोद्घाटनात् सिद्धान्तिना प्रागेव दर्शिता ।

**प्रभाकरमतम्** :– प्रभाकरः अधिकरणमिदं अधिकरणद्वयमिव

विषयद्वयेन प्रत्यपादयत् । तत्र सोमस्य एकच्छन्दसोऽभावात् 'गायत्र–च्छन्दसः' इति अयोगव्यावृत्त्या विशेषणम् । ततश्च नोत्कर्ष इति एको विषयः । ततश्च इन्द्रपीतस्य इत्यत्र बहुव्रीह्याश्रयणेन सवनविशेष–णत्वात् सर्वे सोमाः समन्त्रका इति द्वितीयो विषय इति प्रभाकर–मतम् ।

---

इति

तृतीयाध्यायस्य द्वितीयः पादः समाप्तः

---

## तृतीयाध्यायस्य द्वितीयपादाधिकरणेषु प्रतिपादिता विषयाः

१. मन्त्रस्य मुख्ये एव विनियोग इति प्रथमाधिकरणे प्रतिपादितम् ।

२. ऐन्द्रीमन्त्रस्य गौणार्थे विनियोग इति द्वितीयाधिकरणे प्रतिपादितम् ।

३. हविष्कृन्मन्त्रस्य आह्वाने एव विनियोग इति तृतीयाधिकरणे प्रतिपादितम् :

४. अग्निविहरणादिमन्त्रौ काललक्षकाविति चतुर्थाधिकरणे प्रतिपादितम् ।

५. सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वमेवेति पञ्चमाधिकरणे प्रतिपादितम् ।

६. सूक्तवाकाना अर्थानुसारेणैव विनियोग इति षष्ठाधिकरणे प्रतिपादितम् ।

७. काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गत्वमेवेति सप्तमाधिकरणे प्रतिपादितम् ।

८. प्राकृतानां मन्त्राणां आग्नीध्रोपस्थाने एव विनियोग इति अष्टमाधिकरणे प्रतिपादितम् ।

९. समाख्यया सम्बन्धे सिद्धे लिङ्गादेव मन्त्रस्य विभज्य विनियोग इति नवमाधिकरणे प्रतिपादितम् ।

१०. 'मन्द्राभिभूतः' इत्यदिः मन्त्रः सर्वोऽपि भक्षणे एव विनियुज्यते इति दशमाधिकरणे निरूपितम् ।

११. 'इन्द्रपीतस्य' इत्यत्र बहुव्रीहिरेव न तत्पुरुष इति एकादशा–धिकरणे प्रतिपादितम् ।

१२. उभयभक्षणे मित्रावरुणादिभिस्सह इन्द्रोऽप्युपलक्षणीय इति द्वादशाधिकरणे प्रतिपादितम् ।

१३. पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणमेवेति त्रयोदशाधिकरणे निरूपितम् ।

१४. पात्नीवतशेषभक्षणे त्वष्टा नोपलक्ष्यते इति चतुर्दशाधिकरणे प्रतिपादितम् ।

१५. पात्नीवतशेषभक्षणे त्रिंशता देवाना अनुपलक्षणमिति पञ्चदशा-धिकरणे निरूपितम् ।

१६. भक्षणे अनुवषट्कारदेवता नोपलक्ष्यते इति षोडशाधिकरणे निरूपितम् ।

१७ अनैन्द्राणाममन्त्रक भक्षणमिति सप्तदशाधिकरणे प्रतिपादितम् ।

१८. ऐन्द्राग्नभक्ष अमन्त्रक एवेति अष्टादशाधिकरणे निरूपितम् ।

१९. 'गायत्रछन्दसः' इत्यादिमन्त्रस्य ऐन्द्रे एव विनियोगः इति एकोनविंशाधिकरणे निरूपितम् ।

इति

तृतीयाध्यायस्य द्वितीयः पादः समाप्तः

— —

## अथ तृतीयाध्यायस्य तृतीयः पादः

## उच्चैस्त्वादीनां वेदधर्मताधिकरणम्

(३–३–१)

श्रुतेर्जाताधिकारस्स्यात् ।१। इदं पूर्वपक्षपरं सूत्रम् ।

वेदो वा प्रायदर्शनात् ।२। लिङ्गाच्च ।३। धर्मोप–देशाच्च न हि द्रव्येण सम्बन्धः ।४। त्रयी विद्याख्या च तद्विदि ।५। व्यतिक्रमे यथाश्रुतीति चेत् ।६। न सर्वस्मिन्निवेशात् ।७। वेदसंयोगात् न प्रकरणेन बाध्येत ।८। इयन्ति सिद्धान्तपरसूत्राणि ।

इतःपरं वाक्यादेः प्रामाण्यनिरूपणमस्मिन्पादे क्रियते । 'उच्चैर्ऋचा क्रियते' । उपांशु यजुषा । उच्चैस्साम्ना[1] इति ज्योतिष्टोमे श्रूयते । तत्र उच्चैस्त्वादयः किं मन्त्रधर्माः उत वेदधर्मा वेति संशयः । तत्र मन्त्रवाचिना ऋगादिशब्दाना विधिवाक्ये प्रयोगात् उच्चैस्त्वादयः मन्त्रधर्मा एव । तथा च यजुर्वेदोत्पन्ना ऋचः उच्चैः कर्तव्या इति पूर्वपक्षः ।

---

1. J. N. V. P. 138

उपक्रमोपसंहारदर्शनात् असञ्जातविरोधित्वाच्च एते वेदधर्मा एव। तद्यथा–'त्रयो वेदा अजायन्त' इत्यत्र प्रथमं वेदशब्दः श्रुतः। स च असञ्जातविरोधी। तथा च विधिवाक्यगतानां च ऋगादिशब्दानां वेदपरत्वे एव विरोधो न भवति। अतश्च यजुर्वेदोत्पन्नऋक्षु याजुर्वेदिकोपांशुस्वर एव कर्तव्य इति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :– ऋक्शब्दस्य ऋचि मुख्यत्वात् उच्चैस्त्वादिः मन्त्रधर्मः। उपक्रमस्थवेदपदमपि ऋक्परमेवेति पूर्वपक्षः। उपक्रमे पदार्थज्ञानं भवति। उपसंहारे च तद्विशेषप्रतिपत्तिर्भवति। अतश्च उपक्रमोपसंहारसन्दर्शने उपक्रमवेदपदे विरोधाभावात् उपसंहारऋक्पदे एव वेदलक्षणा क्रियते। यस्मात् वेदधर्म एव उच्चैस्त्वादिरिति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– उच्चैस्त्वादिः मन्त्रधर्म इति पूर्वपक्षः। तत्र यतः ऋगादिशब्दाः मन्त्रवाचिनः तत एव ऋगादिर्मन्त्रधर्म इति भाट्टमते। ऋक्शब्दस्य ऋचि मुख्यत्वात् मन्त्रधर्म इति प्रभाकरमते। उपसंहारस्थ ऋक्शब्द एव वेदपर इति वेदधर्म एव उच्चैस्त्वादिरिति उभयमत–सिद्धान्तः। तदेवं उपसंहारैकवाक्यताबलेन अर्थनिर्णयात् वाक्याद्विनियोग इति।

—:o:—

## आधाने गानस्य उपांशुताधिकरणम्

(३-३-२)

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसयोग· ।९।
इद सिद्धान्तपर सूत्रम् ।

वामदेव्यादिसाम्ना कि उत्पतिविधिनिबन्धनः स्वरः उत विनियोग विधिनिबन्धनः स्वरो वेति संशयः : तत्र यद्यपि वामदेव्यादिसामानि याजुर्वेदिकाधानस्याङ्गेन श्रुतानि, तथापि तेषामुत्पत्तिः सामवेदे श्रुता । अतश्च उत्पत्तेश्च शीघ्रबुद्धिहेतुत्वात् वामदेव्यादिसामसु सामवेदसम्बन्धि उच्चैः स्वर एव कर्तव्य इति पूर्वपक्षः ।

'य एवं विद्वान्वामदेव्य गायति' इति साम्नो विनियोगः यजुर्वेदे श्रुतः । उत्पत्त्यपेक्षया विनियोगस्य प्रबलत्वात् विनियोगविधिनिबन्धन एव स्वरो भवति । तत्र गुणस्तावन्मुख्यमनुसरति । तथा च सामरूप-गुणः आधानोद्देशेन विधीयते । अतश्च प्रधानस्य आधानस्य यजुर्वेदे श्रुतत्वात् तत्रैव विनियोगवाक्यश्रवणाच्च याजुर्वेदिकोपांशुस्वरेण सामानि गेयानि इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** .— याजुर्वेदिकाधाने सामवैदिकाङ्गविधाने तत्र वाक्यान्तरानपेक्षत्वेनैव स्ववाक्ये न स्वार्थो विधेयो भवति । अतश्च सामवैदिकस्वर एव वामदेव्यादिसामसु कर्तव्य इति पूर्वपक्षः । अङ्गत्व-बोधने प्रधानस्याधानस्यैव सामर्थ्यात् विहितस्वार्थक सामवैदिकमङ्गं

प्रधानेनैकी भवति। तथा च प्रधानस्य आधानस्य यजुर्वेदे विनियोग-सम्भवात् याजुर्वैदिकस्वर एव वामदेव्यादिसामसु कर्तव्य इति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :- उत्पत्तेश्च शीघ्रबुद्धिहेतुत्वात् उत्पत्तिनिबन्धन एव स्वर इति भाट्टमते पूर्वपक्षः। वाक्यार्थः स्ववाक्येनैव बोध्य इति सामवेदोत्पन्नाना साम्नां स एव स्वर इति प्रभाकरमते पूर्वपक्ष। उत्पत्त्यपेक्षया विनियोगस्य प्रबलत्वात् विनियोगनिबन्धन एव स्वर इति मतद्वयमपि समानमेव।

—.o:—

## ज्योतिष्टोमस्य याजुर्वेदिकताधिकरणम्

(३–३–३)

भूयस्त्वेनोभयश्रुति।१०। इदं सिद्धान्तपरं सूत्रम्।

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येतद्वाक्यं वेदद्वयेऽप्यस्ति। तदा क्व विधिः क्व चानुवादः इति सशयः। अत्रैव विधिरित्यत्र नियामकाभावादनिर्णय एवेति पूर्वपक्षः। सोमद्रव्यस्य इन्द्रवायव्यादिदेवतायाश्च यजुर्वेदेऽधिगतत्वात्, अङ्गबाहुल्याच्च याजुर्वैदिकवाक्ये एव विधिरिति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :- प्रधानश्रुतिः यदि उभयत्रापि भवति, तदा अगृह्यमाणविशेषत्वादुभयत्र विधिरिति पूर्वपक्षः। यत्राङ्गबाहुल्य श्रूयते तत्रैव विधिरिति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– अत्रैव विधिरिति नियामकाभावात् अनिर्णय एवेति भाट्टमते पूर्वपक्षः। अगृह्यमाणविशेषत्वादुभयत्र विधिरिति प्रभाकरमते पूर्वपक्षः। यत्राङ्गबाहुल्यं श्रूयते तत्रैव विधिरिति सिद्धान्तस्समान एव।

यजुर्वेदे एव अङ्गबाहुल्यस्य श्रवणात् याजुर्वेदिकज्योतिष्टोमवाक्ये विधिरिति सोदाहरणं भाट्टमते प्रतिपादितम्। प्रभाकरः उदाहरणमन्तरा सामान्यतयैव इदमधिकरणं प्रतिपादितवान्॥

—:o:—

## प्रकरणस्य विनियोजकताधिकरणम्

(३–३–४)

असयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्। ११।
इदं सिद्धान्तपरं सूत्रम्।

वाक्यप्रामाण्यनिरूपणानन्तर प्रकरणस्य प्रामाण्य निरूप्यते। प्रयाजादि ऋत्वङ्गं भवति न वेति सशयः। श्रुतिलिङ्गवाक्यातिरिक्तस्य प्रकरणस्यानिरूपणीयत्वात् प्रकरण नाम किञ्चित्प्रमाणं नास्ति। तथा च 'दर्शपूर्णमासाभ्या स्वर्गकामो यजेत 'इत्यस्य 'समिधो यजति' इति वाक्येन सह परस्पराकाङ्क्षाभावात् प्रयाजादि ऋत्वङ्गं न भवतीति पूर्वपक्षः।

दर्शपूर्णमासवाक्ये उपकार्याकाङ्क्षोऽस्ति। प्रयाजादिषु फला–काङ्क्षा वर्तते। तथा च सम्पन्नवाक्यैकवाक्यतारूपप्रकरणप्रमाणेन प्रयाजादीनां ऋत्वङ्गत्वसिद्धिरिति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** :– प्रकरणं नाम प्रमाणान्तरं मास्तु । किन्तु अधिकारनियोगेन प्रयाजाद्यन्वयात् 'समिधो यजति' इत्यादिभिः परमापूर्वमन्वितमेव अभिधीयते इति श्रौतीयं शेषता इति पूर्वपक्षः । समिधादीनां अपूर्वार्थता तु सामान्याकारेण सिध्यत्येव, किन्तु करणोपकारकत्वेन विशेषान्वयो न भवति । तस्मात्प्रकरणाद्विशेषान्वयो भवतीति प्रकरणं नाम प्रमाणान्तरमस्त्येवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– प्रकरण नाम प्रमाण नास्ति । तस्मात्प्रयाजादि क्रत्वङ्गं न भवतीति भाट्टमते पूर्वपक्षः । श्रौती शेषतैव प्रयाजादीनामिति प्रभाकरमते पूर्वपक्षः । परस्पराकाङ्क्षावशात् वाक्यैकवाक्यतारूपं प्रकरणं नाम प्रमाणमस्ति । तथा च प्रकरणात् प्रयाजादि क्रत्वङ्गमिति भाट्ट–मतम् । प्रकरणादेव विशेषान्वयः समिधादीनामिति प्रकरण प्रमाणमेवेति प्रभाकरमतम् ।।

—:o:—

## क्रमस्य विनियोजकताधिकरणम्

(३–३–५)

क्रमश्च देशसामान्यात् ।१२। इद सिद्धान्तपरं सूत्रम् ।

अस्मिन्नधिकरणे क्रमस्य प्रामाण्य निरूप्यते ।

'दब्धिरस्यादि' मन्त्रः उपांशुयाजाङ्गं भवति नवेति संशयः 'दब्धिरस्य दब्धो भूयासम्', अमु दभेयम् इत्ययं मन्त्रः दर्शपूर्णमासयोः याजमाने मन्त्रकाण्डे श्रूयते । तस्य ब्राह्मणे विनियोगवाक्याभावात् आग्नेयाग्नीषो-

मीयोपाशुयाजानां प्रकरणस्य समानत्वात् नोपांशुयाजाङ्गमयं मन्त्र इति पूर्वपक्षः ।

आध्वर्यवकाण्डे आग्नेयोपाशुयाजाग्नीषोमीयकर्माणि क्रमेणाम्नातानि । मन्त्रकाण्डे मन्त्राश्च क्रमेणैवाम्नाताः । तथा च द्वितीयः 'दब्धिरस्य' इत्यय मन्त्रः द्वितीयोपांशुयाजाङ्गमिति क्रमप्रमाणेन ज्ञायते । एकवाक्यत्वाभावाच्च नास्य क्रमस्य प्रकरणेऽन्तर्भावः । 'समानदेशत्वं क्रमः[1]' इति क्रमस्वरूपम् ।

पाठकृतमर्थकृत चेति क्रमः द्विविध भवति । तत्र पाठश्च यथासंख्यसन्निधिपाठाभ्यां द्विविध· यथासख्यपाठस्य 'दब्धि' मन्त्र उदाहरणम् । 'शुन्धध्वम्' इत्यादिमन्त्रः सन्निधिवशात् तत्पात्रप्रोक्षणे विनियुज्यते । पशुधर्माणामग्नीषोमीयाङ्गत्वमनुष्ठानसादेश्यादित्येवं त्रिविधक्रमप्रमाणनिरूपणम् । इति भाट्टमतम् ।

प्रभाकरमतम् :– 'दब्धिरस्य' इत्यादिमन्त्रः प्रधानदेवतानुमन्त्रणार्थ एव, न तु क्रमादुपाशुयाजाङ्गम् । तेन च क्रमस्य प्रामाण्यं नास्तीति पूर्वपक्षः । ऐदमर्थ्यविशेषावगतौ क्रमेऽपि प्रमाणमेव । अतश्च क्रमान्मन्त्रविनियोगः । तथा च क्रमोऽपि प्रमाण एवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– 'दब्धिरस्य' इत्यादिमन्त्रस्य न उपांशुयाजाङ्गत्वमिति भाट्टमते पूर्वपक्षः । क्रमस्य प्रामाण्यं नास्तीति प्रभाकरमते पूर्वपक्षः । क्रमप्रमाणेन मन्त्रस्य उपांशुयाजाङ्गत्वमिति भाट्टमतम् । मन्त्रविनियोगे क्रमस्यापि प्रामाण्यमेव । तथा च क्रमः प्रमाणमिति प्रभाकरमतम् ।।

—:o:—

1. J. N. V. P. 141

## समाख्याविनियोजकताधिकरणम्

(३-३-६)

आख्या चैवं तदर्थत्वात् ।१३। इदं सिद्धान्तपरं सूत्रम् ।

अस्मिन्नधिकरणे समाख्यायाः प्रामाण्यं निरूप्यते ।

वेदत्रयगतधर्माणा ऋत्विक्षु संगतिः नियतोऽनियतो वेति संशयः । ऋग्वेदे याज्यापुरोनुवाक्यादयो धर्माः प्रोक्ताः । यजुर्वेदे दोहननिर्वापानदयः । सामवेदे आज्यस्तोत्रपृष्ठस्तोत्रादयः । तदा अस्मिन् ऋत्विजि अय धर्मः, अनेन कार्य, इत्यस्य दुर्निरूपत्वात् येन केनापि यःकोऽपि धर्मः ऋत्विजा कर्तव्य इति पूर्वपक्षः ।

अबोधकत्वाबाधकत्वयोरप्रामाण्यकारणयोरभावात् समाख्यापि विनियोजिका । तथा च 'हौत्रम्' 'आध्वर्यवम्' 'औद्गात्रम्' इति समाख्यावशात् ते धर्माः व्यवस्थयैव प्राप्नुवन्ति इति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– समाख्यायाः लौकिकत्वात् वेदार्थावगतौ प्रामाण्यं न भवतीति पूर्वपक्षः । यद्यपि समाख्या लौकिकी, तथापि वेदार्थावगतौ हेतुत्वमस्त्येव । वैदिककर्मसु कर्तृविशेषाश्रवणात् तत्र धर्माः हौत्रादि–समाख्यया व्यवस्थिता भवन्ति । तथा च समाख्या प्रमाणमेवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :— वेदत्रयोक्तधर्मा अनियता एवेति भाट्टमते पूर्वपक्षः । समाख्यायाः लौकिकत्वात् प्रामाण्यं नास्तीति प्रभाकरमते पूर्वपक्षः । वेद-त्रयोक्तधर्माः समाख्यया नियता एवेति सिद्धान्तः समानः । तथा च समाख्यायाः प्रामाण्यमेवेति प्रभाकरमतम् ॥

—:o:—

## श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वाधिकरणम्

(३–३–७)

### ( बलाबलाधिकरणम् )

श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ।१४। इदं सिद्धान्तपरं सूत्रम् ।

अङ्गत्वे प्रमाणत्वेनाभ्युपगतेषु श्रुत्यादिषु निरूपितेषु अधुना उत्तरोत्तरप्रमाणापेक्षया पूर्वपूर्वस्य प्राबल्य निरूप्यते । श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान-समाख्याना समवाये पारदौर्बल्यमर्थविप्रकषात्'' इति जैमिनिनोक्तं सूत्रमिदमेकमेव षण्णां श्रुत्यादिप्रमाणाना निरूपकम् । तत्र भाष्ये[2] षड्विषयेषु तत्तत्प्रमाणपुरस्सर एकस्मिन्नेवाधिकरणे पारदौर्बल्यं निरूपितम् । ततश्च कुमारिलः तान् षड्विषयान् षडधिकरणरूपेण उपन्यस्तवान् । तद्यथा–ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र श्रुतिलिङ्गयो-

1. J. N. V. P. 142
2. Ibid ,,

विरोधे कि श्रुतिः प्रबला न वेति संशयः । तत्र 'कदाचन स्तरीरी सनेन्द्र[1]-सश्चपि दाषुसे इत्यसौ ऋगैन्द्री । अतश्च 'ऐन्द्र्या' इत्यत्र इन्द्रप्रकाशन-सामर्थ्यरूपाल्लिङ्गात् इन्द्रविषयक्रियासाधनत्वं गम्यते । इन्द्रपद-वैयर्थ्यभिया इन्द्रप्रधानक्रियासाधनत्वमङ्गीकर्तव्यम् । का सा क्रिया इति चेत्-'ऐन्द्र्या उपतिष्ठते' इत्यनेन उपस्थानक्रियाया पर्यवसान भवति । तदा ऐन्द्रेण मन्त्रेण उपतिष्ठेत इत्यर्थो भवति । तथैव 'गार्हपत्यम्' इति श्रुत्या गार्हपत्यस्यापि प्राधान्य गम्यते । तस्य च गुणभूतक्रिया क्रियामन्तरेण प्राधान्यानवगमात् 'तादृशीं या काञ्चित् क्रियां प्रति गार्हपत्यः प्रधानम्'। इत्येतादृशज्ञानं जायते । तदा 'ऐन्द्र्या उपतिष्ठते' इति पदद्वयेन मन्त्र-विशेष क्रियाविशेषयोः पर्यवसानात् 'एन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठते' इत्यर्थो भवति । तथा च श्रुतिलिङ्गयोर्विरोधे व्रीहियववद्विकल्प इति प्रथमः पक्षः ।

श्रुतिलिङ्गयो. प्राधान्यत्वाविशेषात् गुणभूतोपस्थानमपि द्वयोस्स-मानत्वात् श्रुतिलिङ्गयोस्समुच्चय इति द्वितीयः पक्षः

उपजीव्यत्वेन लिङ्गस्यैव प्राबल्यात् इन्द्र एव मन्त्रेण उपस्थेय इति तृतीयः पक्षः ।

सिद्धान्तः :- यावल्लिङ्गं श्रुतिं कल्पयित्वा प्रवर्तते, तावच्छ्रुते· स्वतः प्रवृत्तिसामर्थ्यस्य सत्त्वात् श्रुतिः लिङ्गात् शीघ्रं प्रवृत्ता भवति। ततश्च यावल्लिङ्गान्मन्त्रस्य इन्द्रोपस्थानाङ्गत्वं कल्प्यते । तावच्छ्रुतिः प्रथममेव प्रवृत्ता मन्त्रस्य गार्हपत्योपस्थानाङ्गत्वं कल्पयति । श्रुत्या विनियुक्तस्य मन्त्रस्य पुनर्विनियोगाकाक्षाभावात् नात्र लिङ्गं विनियो-

---

1. J. N. V. P. 142

जकम्। अतश्च श्रुतिलिङ्गयोः विरोधे श्रुतिः ज्यायसीति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :– ऐन्द्री मन्त्रः श्रुत्या ऐन्द्रीगार्हपत्योपस्थाने विनियुज्यते। लिङ्गेन च इन्द्रोपस्थाने। तथा च द्वयो. श्रुतिलिङ्गयोः विरोधाभावात् मन्त्रः द्विरावर्त्यं इति पूर्वपक्षः। मन्त्रस्तु प्रथम श्रुत्यैव ऐन्द्रीगार्हपत्योपस्थाने विनियुक्तः। तदनन्तरं मन्त्रस्य आकांक्षाभावात् लिङ्गेन पुनर्विनियोगो न भवति। तस्माल्लिङ्गापेक्षया श्रुतिः प्रबलेति प्रभाकरमतेन सिद्धान्तः।

**मतभेदः** :– 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र तुल्ययोः श्रुति–लिङ्गयोः विरोधे व्रीहियववद्विकल्प इति प्रथमः पक्षः। द्वयोरपि प्राधान्यात् समुच्चय इति द्वितीयः पक्षः। उपजीव्यत्वेन लिङ्गस्यैव प्राबल्यमिति तृतीयः पक्षः। इत्येवं भाट्टमते पूर्वपक्षः। श्रुतिलिङ्गयोः प्राधान्यादेव मन्त्रस्य द्विरावृत्तिरिति प्रभाकरमते पूर्वपक्षः। श्रुत्या विनियोजकत्वे सिद्धे लिङ्गस्य प्रयोजनाभावात् श्रुतिरेव बलीयसीति सिद्धान्तः समान एव।

---

## वाक्याद्यपेक्षया लिङ्गस्य प्राबल्याधिकरणम्

(३–३–८)

वाक्याद्यपेक्षया लिङ्गस्य प्राबल्यमस्ति नवेति संशयः। तत्र 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुमनस्यमानः[1]' इति दर्शपूर्णमासयोः श्रूयते। तत्र 'तस्मिन्' इति तच्छब्देन पूर्वोत्तरवाक्ययोः एकवाक्यत्व–प्रतीतेः सर्वोऽपि मन्त्रः स्थानकरणेऽङ्गम्। तत्र च 'सर्वेणानेन मन्त्रेण स्थानं कर्तव्यम्' 'सर्वेण मन्त्रेण पुरोडाशः स्थापनीयः' इत्येवं श्रुतिः कल्पनीया भवति। तथा च सदनाङ्गत्ववत् प्रतिष्ठापनाङ्गस्यापि वाक्याद्बोधो भवति। अतश्च सदनप्रतिष्ठापनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा। तथा च लिङ्गवाक्ये समाने इति पूर्वपक्षः।

पूर्वपक्षे द्वयोः वाक्ययोः परस्परान्वयद्वारा एकवाक्यत्व सम्पाद्य मन्त्रस्य विकल्पः समुच्चयो वेत्युक्तम्। तत्तु न सम्भवति। यतः लिङ्गव्यवधानेन श्रुतिं प्रति वाक्यं तावच्छीघ्रतया न प्रवृत्तो भवति। अतश्च लिङ्गेन वाक्यस्य बाधात् द्वयोर्वाक्ययोरर्थद्वयं प्रतीयते। अतश्चात्र लिङ्गादेव वाक्यद्वयं विनियुज्यते। तस्मात् वाक्याद्यपेक्षया लिङ्गस्य प्राबल्यमिति भाट्टमतेन सिद्धान्तः।

**प्रभाकरमतम्** – यावन्ति पदानि प्रयुज्यन्ते तानि सर्वाण्यपि

1. J. N. V. P. 143

सम्भूय एकमर्थं बोधयितुं शक्नुवन्ति । अतश्च प्रथमतः एकवाक्यतया, ततश्च लिङ्गद्वारा विनियोगः । तस्मात् वाक्यप्रमाण प्रबलमिति पूर्वपक्षः । पाठमात्रादेव यजुःपदानां सम्भूय बोधकता नास्ति । किन्तु अनुष्ठेयैकार्थतयैव । अतश्च अनुष्ठेयधीः लिङ्गादेव भवतीति वाक्यापेक्षया लिङ्गस्यैव प्राबल्यमिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :— लिङ्गवाक्ययोस्समानबलत्वमेवेति भाट्टमते पूर्वपक्षः । लिङ्गापेक्षया वाक्यमेव प्रबलमिति प्रभाकरमते पूर्वपक्षः । लिङ्गादेव वाक्यद्वयस्य विनियोगसम्भवे वाक्यं दुर्बलमेवेति भाट्टमतम् । अनुष्ठेयधीः लिङ्गादेव भवतीति लिङ्गमेव प्रबलमिति प्रभाकरमतम् ।।

—:o:—

## वाक्यस्य प्रकरणाद्यपेक्षया प्राबल्याधिकरणम्

(३–३–९)

प्रकरणाद्यपेक्षया वाक्यस्य प्राबल्यमस्ति न वेति सशय. । 'अग्नीषोमाविद हविरजुषेताम्' अवीवृधेताम्, महोज्यायोऽक्राताम्' इति सूक्तवाके श्रूयते । पूर्वाधिकरणवदेवात्रापि वाक्यानां विभज्य विनियोग इत्यत्र न कापि विप्रतिपत्तिः । किन्तु 'इदं हवि'' इत्यादिकमवशिष्टम् पदजातं, तदग्नीषोमगतमपि अमावास्यां अग्नीषोमपदपरित्यागेन पठनीयम् । तथा इन्द्राग्निमन्त्रगतमपि । अतश्च प्रकरणादेतेषां मन्त्रभागाना दर्शपूर्णमासशेषता सिध्यतीति पूर्वपक्षः ।

अग्नीषोममन्त्रशेषस्य इन्द्राग्निपदान्वयाश्रवणात् यदा प्रकरणं वाक्य कल्पयित्वा, लिङ्गश्रुतिकल्पनाद्वारा प्रवर्तते । तदा प्रकरणस्य

व्यन्तरितं प्रामाण्यं भवति । तदपेक्षया अग्नीषोमपदान्वयरूपं वाक्यं लिङ्ग-श्रुतिकल्पनाद्वारा शीघ्रमेव प्रवर्तते । तस्माद्वाक्येन प्रकरणस्य बाधात् वाक्यादेव तच्छेषः तत्रैवावतिष्ठते । अतश्च प्रकरणाद्वाक्यं प्रबलमिति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– कार्यार्थ एव सकलपदार्थानामन्वयः । अतश्च वाक्यप्रकरणयोस्तुल्यबलत्वमेवेति पूर्वपक्षः। वाक्येन पूर्वमेव क्लुप्तस्य प्रकरणात् पुनर्विनियोगो न भवति । अतश्च वाक्यादेव विनियोगः । तेन च प्रकरणाद्वाक्यं बलीयमिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– प्रकरणादेव मन्त्रभागानां दर्शपूर्णमासशेषता इति भाट्टमते पूर्वपक्षः । सकलपदार्थानामन्वयः कार्यार्थ एवेति वाक्यप्रकरण-योस्तुल्यबलत्वमिति प्रभाकरमते पूर्वपक्षः । प्रकरणापेक्षया वाक्य शीघ्रं प्रवर्तते । तस्माद्वाक्यप्रमाणं प्रबलमिति भाट्टमतम् । वाक्यं पूर्वमेव क्लुप्तमिति प्रकरणाद्वाक्य बलीयमिति प्रभाकरमतम् ।

—:o:—

## प्रकरणस्य क्रमाद्यपेक्षया प्राबल्याधिकरणम्

(३–३–१०)

क्रमाद्यपेक्षया प्रकरणस्य प्राबल्यमस्ति न वेति संशयः इष्टिपशुसोम-यागात्मके राजसूये अभिषेचनीयाख्यः कश्चित् सोमयागोऽस्ति । तत्सन्निधौ 'अक्षैर्दीव्यति' 'राजन्यं जिनाति' इत्यादयः देवनादयो धर्माः श्रूयन्ते । तत्र सन्निधिबलाद्देवनादयो धर्मा अभिषेचनीयाङ्गमिति पूर्वपक्षः ।

अभिषेचनीयस्य ज्योतिष्टोमविकारत्वात् अतिदिष्टैरेवाङ्गैः तत्र

निराकांक्षत्वात् देवनादयो न तत्र अङ्गतामाप्नुवन्ति । अतश्च राजसूयस्य कथम्भावाकांक्षाया अनुवृत्ता धर्माः तत्रैव प्रकरणेन विनियुज्यन्ते । तस्मात्क्रमापेक्षया प्रकरण झटिति प्रवर्तते इति प्रकरणाद्देवनादयः सर्वशेषा इति। तथा च प्रकरणात्क्रमस्य बाधात् प्रकरणं बलीय इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :– यदा प्रकरणप्रमाणेन सर्वकरणसम्बन्धः कर्तव्यो भवति । सदा सर्वैस्सह सन्निधिः कल्प्यो भवति । अतश्च क्रमप्रमाणादेव तत्र विनियोगसम्भवे क्रमप्रमाण प्रबलमिति पूर्वपक्षः । अन्यतराकाक्षाया सत्यामेव सन्निधिप्रमाण प्रवर्तते । आकाङक्षास्वीकारे च प्रकरणादेव विनियोगो भवति । तथा च विदेवनादीनां क्रत्वङ्गत्व प्रकरणादेव सिध्यतीति प्रकरणस्य क्रमापेक्षया प्राबल्यमस्त्येवेति प्रभाकरमतेन सिद्धान्तः ।

**मतभेद** :– विदेवनादयः सन्निधिवशादभिषेचनीयाङ्गमिति पूर्वपक्षस्समान एव । अभिषेचनीयस्य आकाक्षाभावात् ते धर्माः तत्सन्निधिपठिता अपि नाभिषेचनीयाङ्गम् । किन्तु प्रकरणाद्राजसूयाङ्गमिति सिद्धान्तोऽपि सम एव । तस्मात् क्रमापेक्षया प्रकरण प्रबलमिति ॥

—:o:—

## क्रमस्य समाख्यापेक्षया प्राबल्याधिकरणम्

(३-३-११)

समाख्यापेक्षया क्रमप्रमाणस्य प्राबल्यमस्ति न वेति संशयः। तत्र 'पौरोडाशिकम्' इति याज्ञिकसमाख्याते काण्डे 'शुन्धध्वं दैव्याय कर्मणे' इत्ययं मन्त्रः पठितः। तथा च समाख्यावशात् पुरोडाशकाण्डोक्तानां उलूखलमुसलादीनामपि मन्त्रोऽङ्गमिति पूर्वपक्षः।

'पौरोडाशिकम्' इति समाख्याया प्रकृत्या पुरोडाश उच्यते। तद्धितप्रत्ययेन च काण्डमित्यर्थो बोध्यते। अतश्च कृत्स्नपुरोडाशपात्राणां मन्त्रसन्निधिः अप्रत्यक्ष इति अर्थापत्त्या कल्प्यते। अतश्च समाख्या तु-सन्निधिं कल्पयित्वा प्रकरणद्वारा वाक्यलिङ्गश्रुतयः कल्पयित्वा प्रवृत्ता भवति। तस्मात्पूर्वमेव सान्नाय्यपात्राणा शोधने प्रत्यक्षो मन्त्रसन्निधि-रस्ति। अतः सन्निधिवशात् सान्नाय्यपात्रशोधने अय मन्त्रः शेषो भवति। तथा च क्रमप्रमाणेन समाख्याया बाधात् क्रममेव बलीय इति भाट्टमतेन सिद्धान्तः।

प्रभाकरमतम् :– 'शुन्धध्वम्' इत्यादिमन्त्रः सन्निधिवशात् सान्ना-य्यपात्रशोधनार्थः। तथा च उभयोः क्रमसमाख्ययोस्तुल्यबलत्वमेवेति पूर्वपक्षः। क्रमो वैदिकः, समाख्या तु लौकिकी। तस्मात्क्रम एव प्रबलः। क्रमस्थले सन्निधिसिद्ध एव। समाख्यायास्तु लौकिकत्वात् वेदार्थे साक्षात्सम्बन्धं न निदधाति। अतश्च प्रत्यक्षसन्निधाने सति

सन्निधानान्तरकल्पना न युक्ता भवति । तस्मात् समाख्यायाः क्रमो बलीय इति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :– 'शुन्धध्वम्' इत्ययं मन्त्रः क्लुप्तसमाख्यावशात् पुरोडाशकाण्डोक्ताना उलूखलमुसलादीनां अङ्गमिति भाट्टमते पूर्वपक्षः । क्रमसमाख्ययोस्तुल्यबलत्वात्, 'शुन्धध्वम्' इत्यादिमन्त्रः उभयत्रापीति प्रभाकरमते पूर्वपक्षः । सान्नाय्यपात्रशोधने प्रत्यक्षमन्त्रसन्निधिवशात् तत्रैव स मन्त्र इति भाट्टमतेन सिद्धान्तः । समाख्यायाः लौकिकत्वात् वैदिकक्रमप्रमाणेनैव मन्त्रविनियोग इति प्रभाकरमतम् । तस्मात्क्रम–प्रमाणं समाख्यापेक्षया प्रबलमिति ॥

—:o:—

## बाधयोग्यताधिकरणम्

(३-३-१२)

प्राप्त्यप्राप्त्यो' बोधो युक्तोऽयुक्तो वेति संशयः। प्राप्तस्य प्रवृत्तिरेवास्तीति न तन्निवारयितु शक्यते। अप्राप्तस्य तु बाधविषयत्वेन अवस्थानमेव नास्ति। तस्माद्बोधो न युक्त इति चेन्न। बुध्या विषयीकृतस्य वारयितुं शक्यत्वात् न चैतदत्यन्त प्रवृत्तम्। अनुष्ठानरूपफल–पर्यवसानाभावात् नाप्यत्यन्तमप्रवृत्तम्। तद्बुद्धेरुत्पन्नत्वात्। अतश्च उक्तदोषद्वयं नस्ति। दशमाध्याये प्राप्तबाधविचारः कृतः। चोदकेन प्राप्तस्य बाधे प्राप्तबाधः। अत्र तु पूर्वपूर्वप्रमाणावरुद्धैरुत्तरोत्तरैः प्रमाणाभासैः अवबुद्धस्येत्यप्राप्तबाध एवात्र विचारः कृतः। एतदधिकरणं भाट्टमते एवास्ति। अत्र प्रभाकरमतं नास्ति॥

---

## द्वादशोपसत्ताया अहीनाङ्गताधिकरणम्

(३-३-१३)

अहीनो वा प्रकरणाद्गौणः।१५। इदं पूर्वपक्षपरं सूत्रम्।
असंयोगात्तु मुख्यस्य तस्मादपकृष्येत।१६।
इदं सिद्धान्तपरं सूत्रम्।

द्वादशत्वं ज्योतिष्टोमे निविशते अथवा अहर्गणे वेति संशयः । तत्र 'तिस्र एव साह्नस्योपसदः द्वादशाहीनस्य'' इति ज्योतिष्टोमप्रकरणे श्रूयते । एकाह्नानिष्पाद्यत्वात् साह्नो ज्योतिष्टोमः । तथैव 'ज्योतिष्टोमशब्दस्य निखिलसोमयागप्रकृतित्वेन सर्वेषामङ्गाना तत्र उपदेशे सति तदुपदेशविकलविकृतीनामिव हीनत्वाभावात्' अहीनशब्दोऽपि ज्योतिष्टोमपरः । तस्मात् ज्योतिष्टोमे त्रित्वद्वादशत्वयोर्विकल्प इति पूर्वपक्षः ।

आवृत्तसोमयागरूपः द्विरात्रादिरहर्गणः । तस्मिन् अहर्गणे अहीनशब्दः रूढः । अतश्च यौगिकव्युत्पत्त्या अहीनशब्दस्य ज्योतिष्टोमपरत्वे गौरवम् । तस्माद्यौगिकापेक्षया रूढेश्शीघ्रोपस्थितित्वात् अहीनशब्दः अहर्गणे रूढः । अतः द्वादशत्व प्रकरणादपनीय अहीने एव विनिवेश इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** – द्वादशोपसत्ता किं ज्योतिष्टोमस्य उत अहीनस्य वेति संशयः । कार्यार्थत्वान्नियोगस्य प्रकृतिनियोगसम्बन्ध एव न्याय्यः । अहीनसन्निधिरेवात्र नास्तीति वाक्यस्याप्रवृत्तौ प्रकरणप्रमाणेन प्रकरणे एव निवेश इति पूर्वपक्षः । पदार्थान्वयस्य ऐदमर्थ्ये कारणत्वं तु सिद्धमेव । ततश्च वाक्ये न द्वादश उपसदा अहीने एव विनियोगात् ततः प्रकरणादन्यत्र विनियोगो न भवति । अत प्रकरणादुत्कृष्य वाक्येन अहीने एव द्वादशोपसत्ताया विधिरिति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :– साह्न–अहीन शब्दयोः ज्योतिष्टोमपरत्वसम्भवात् त्रित्व, द्वादशत्व च ज्योतिष्टोमे विकल्पेन भवति इति भाट्टमते पूर्वपक्षः । अहीनसन्निधिबोधकस्य वाक्यस्यैवाभावात् प्रकरणे एव निवेश इति प्रभाकरमते पूर्वपक्षः । अहर्गणे रूढ्यर्थकस्य अहीनशब्दस्य यौगिकार्थपरत्वे

---

1. J. N. V. P. 147

प्रमाणाभावात् द्वादशत्वं वाक्यादहीने निविशते इति भाट्टमतम् । पदार्थान्वयः अहीने एव वाक्याद्भवतीति न प्रकरणे द्वादशोपसत्ता निविशते इति प्रभाकरमतम् ॥

—:o:—

## कुलायादौ प्रतिपदोरूत्कर्षाधिकरणम्

(३–३–१४)

द्विबहुत्वयुक्तं चाचोदनात्तस्य ।१७। पक्षेणार्थकृतस्येति चेत् ।१८। न प्रकृतेरेकसंयोगात् ।१९। इमानि सर्वाणि सिद्धान्तपराणि सूत्राणि ।

कुलायादौ प्रतिपदोरुत्कर्षोऽस्ति न वेति संशयः । 'युवं हि स्थः स्वर्पती' इति द्वयोर्यजमानयोः प्रतिपद कुर्यात् । 'एते असृग्रमिन्दवः' इति बहुभ्यो यजमानेभ्य इति । प्रतिपच्छब्देन स्तोत्रोपक्रमे पठनीया ऋगभिधीयते । सा च ज्योतिष्टोमे एव निविशते । ज्योतिष्टोमे द्विबहुयजमानाभावः न शङ्कनीयः । यतः यद्येकः द्रव्यालाभादिना कर्तुं न शक्नोति तदा द्वाभ्यां बहुभिर्वा कर्त्तव्यः । अतश्च द्विबहुयजमानके ज्योतिष्टोमे प्रतिपत्कर्तव्येति भाट्टमते पूर्वपक्षः ।

'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति कुलायनामकयज्ञस्य वाक्ये कुलाये यजमानद्वित्व प्रतीयते । सप्तदशावराः चतुर्विंशतिपरमाः सत्रमासीरन्' इत्यनेन सत्रे यजमानबहुत्व प्रतीयते । तस्मात् द्विबहुयजमानकयोः कुलायसत्रयोः प्रतिपदोरुत्कर्षः । ज्योतिष्टोमे काला-

दिवदेव यजमानैकत्वस्यापि अनुपादेयाङ्गत्वेन यजमानैकत्व त्यक्तु न शक्यते ।
तस्मात्प्रतिपदोरुत्कर्ष इति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– द्विबहुयजमानस्थले प्रकरणे एव प्रतिपदौ भवत इति पूर्वपक्षे वाक्यप्रमाणेन कुलायादौ निवेश इति पूर्वाधिकरणवदेव पूर्वोत्तरपक्षौ समानौ । अधिकाशङ्का तु :–

एककर्तृके यथा शक्तिप्रयोगे सहायस्वीकारात् पत्नीसम्बन्धापेक्षया वा यजमानबहुत्वं सिध्यतीति प्रकरणे एव निवेश इति पूर्वपक्षः । ज्योतिष्टोमे एकस्यैवाधिकारपूर्वककर्तृत्वं, न द्वयोः । यदि पत्न्या अप्यधिकारः स्यात्तदा इतरेतरयोगद्वन्द्वद्वारा द्विवचन स्यात् न तथाऽत्रास्ति । आधाने तु श्रौतासम्भवात् तत्र लक्षणाङ्गीकारः । एवञ्च वाक्येनैव कुलायादौ प्रतिपदोरुत्कर्ष इति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :– वित्तालाभादिना अशक्तैककर्तृके ज्योतिष्टोमे द्विबहुयजमानत्वसम्भवात् नोत्कर्षः प्रतिपदोरिति भाट्टमते पूर्वपक्षः । द्विबहुयजमानकयोः प्रसिद्धयोः कुलायाहीनयोः सत्त्वात्तत्रैव उत्कर्ष इति भाट्टमतम् । ज्योतिष्टोमे द्विबहुयजमानबोधकाभावात् प्रकरणात् वाक्यं भित्वा कुलायाहीनादौ प्रतिपदोरुत्कर्ष इति प्रभाकरमतम् ॥

---

## जाघन्या अनुत्कर्षाधिकरणम्

(३–३–१५)

जाघनी चैकदेशत्वात् ।२०। इदं पूर्वपक्षपरं सूत्रम् ।
चोदना वापूर्वत्वात् ।२१। एकदेश इति चेत् ।२२।
न प्रकृतेरशास्त्रनिष्पत्तेः ।२३। इयन्ति सिद्धान्तसूत्राणि ।

पत्नीसयाजादीनामुत्कर्षोऽस्ति न वेति संशयः । 'जाघन्या पत्नीः संयाजयति' इतीदं वाक्यं दर्शपूर्णमासप्रकरणे श्रूयते । जाघनी नाम पशुपुच्छम् । पत्नीशब्दस्तु 'पञ्च प्रयाजा इज्यन्ते, चत्वारः पत्नीसंयाजा.' इत्यनेन वाक्येन आहुतिचतुष्टयात्मकस्य कर्मणः नामधेयैकदेश इति ज्ञायते । तत्र तृतीयाहुतौ देवतात्वात्तद्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिः । अतश्च दर्शपूर्णमासयोः जाघनी नास्तीति अस्य पशावुत्कर्ष इति पूर्वपक्षः ।

यद्यपि दर्शपूर्णमासयोः जाघनी नास्ति, तथापि क्रयादिना सम्पादयितु शक्यते । अतश्च प्रकरणादुत्कर्षे प्रमाणाभावात् नोत्कर्ष इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम् :–** जाघन्युद्देशेन पत्नीसयाजा विधीयन्ते । उत पत्नीसयाजोद्देशेन जाघनी वेति संशयः । तत्र पत्नीसयाजे जाघनी विधौ प्रकरणे एव निवेशात् जाघनी उपादेया भवति । अतः वाक्यादेव पशुयागे

जाघन्युद्देशेन पत्नीसंयाजा विधीयन्ते । अतश्च उत्कर्ष इति पूर्वपक्षः । पशुयागे जाघनीविधाने पत्न्यर्थोऽपरः विधेयः स्यात् । कर्मविधौ प्रकरणान्तरात् कर्मान्तरविधानं भवेत् । तस्मात्, जाघन्येव पत्नीसंयाजोद्देशे विधीयते । तथा च प्रकरणे एव अस्य विशेषः । तेन नोत्कर्ष इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेदः** :–दर्शपूर्णमासयोः जाघनी नास्तीति तस्योत्कर्षः भाट्टमतपूर्वपक्षे । पशुयागे वाक्यादेव जाघन्युद्देशेन पत्नीसयाजा विधीयन्ते इति प्रभाकरमते पूर्वपक्षः । प्रकरणादुत्कर्षे प्रमाणाभावात्प्रकरणे एव विनियुज्यते इति भाट्टमतम् । कर्मान्तरविधानपरिहाराय प्रकरणे एव जाघनी निविशते इति प्रभाकरमतम् ।

—:o:—

## सन्तर्दनस्य सस्थानिवेशाधिकरणम्

(३-३-१६)

सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ।२४।
इदं पूर्वपक्षपरं सूत्रम् ।

उत्कर्षो वा ग्रहणाद्विशेषस्य ।२५। कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ।२६। क्रतुतो वार्थवादानुपपत्तेः स्यात् ।२७। संस्थाश्च कर्तृवद्धारणार्थाविशेषात् ।२८। उक्थ्यादिषु वार्थस्य विद्यमानत्वात् ।२९। अविशेषात्स्तुतिर्व्यर्थेति चेत् ।३०। स्यादनित्यत्वात् ।३१। इयन्ति सिद्धान्तपराणि सूत्राणि ।

सन्तर्दनस्य प्रकृतौ निवेशः उत विकृतौ वेति संशयः । 'दीर्घसोमे सन्तृद्येद्धृत्यै' इतीद वाक्य ज्योतिष्टोमे श्रूयते । पूर्वाधिकरणवदेव प्रकरणादुत्कर्षे प्रमाणाभावात् 'दीर्घस्य सोमः' इति अवयवव्युत्पत्त्या दीर्घशब्दस्य यजमानपरत्वमङ्गीकर्तव्यम् । तथा च 'दीर्घसोमः' इति पदं ज्योतिष्टोमे अन्वेति । तस्मात्प्रकरणादुत्कर्षे प्रमाणाभावात् प्रकरणे एव उत्कर्ष इति पूर्वपक्षः ।

'लक्षणा अनापादकवाक्यार्थे सम्भवति लक्षणापादकवाक्यार्थस्य अन्याय्यत्वात्' इति निषादस्थपत्यधिकरणन्याय[1]: । तेन न्यायेन अत्र

---

1. J. N. V. P. 310

षष्ठीसमासापेक्षया कर्मधारय एव न्याय्यो भवति । तथा च 'दीर्घश्चासौ सोमश्चे'ति विग्रहो भवति । तेन दीर्घत्वं सोमधर्म एव, न तु यजमान-धर्मः । अतश्च प्रकृतसोमयागापेक्षया विकृतिषु उक्थ्यादिषु ग्रहाधिक्यात्तत्र दीर्घत्वं भवति । तस्मात् 'दीर्घसोमः विकृतगामी । हनू वा एते यज्ञस्य यदधिषवणे न सतृणत्ति, असंतृण्णे हि अहन्' इति सन्तर्दनबाधस्य श्रूयमाणत्वात् सन्तर्दन प्रकृतौ निविशते । 'सोमाभिषवाधारयोरधिषवणफलकयोः सन्तर्दनं कार्यम् । अन्योन्यनियोगेन शैथिल्य माभूदिति दृढसश्लेषः[1]' सन्तर्दनशब्देन उच्यते । तस्मात्प्रकरणादस्य विकृतावुत्कर्ष इति भाट्टमतेन सिद्धान्तः ।

**प्रभाकरमतम्** :-यजमानदैर्घ्येण लतादैर्घ्येण वा दीर्घत्व सम्भवति । अतः सन्तर्दनं प्रकृतावेवेति पूर्वपक्षः । 'दीर्घसोम.' इत्यनेन सोमापेक्षया च दीर्घता विकृति उक्थ्यादिसस्थास्वस्तीति तत्रैव सन्तर्दन विधीयते इति प्रभाकरमतेन सिद्धान्तः ।

**मतभेद** :- यजमानदैर्घ्येण दीर्घत्वसम्भवात् सन्तर्दनस्य प्रकृतावेव निवेश इति भाट्टमते पूर्वपक्षः । यजमानदैर्घ्येण लतादैर्घ्येण वा दीर्घत्व-सम्भवात् प्रकृतावेव सन्तर्दनमिति प्रभाकरमते पूर्वपक्षः । विकृति उक्थ्यादिषु ग्रहाधिक्यतया तत्रैव दीर्घत्व भवति । इत्येव सिद्धान्तस्समान एव ।।

—:o:—

1. J. N. V P. 150

## प्रवर्ग्य निषेधाधिकरणम्

(३-३-१७)

संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ।३२।
इदं पूर्वपक्षपरं सूत्रम् ।

नैमित्तिक वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ।३३।
इदं सिद्धान्तपरं सूत्रम् ।

प्रवर्ग्यप्रतिषेधः किं ज्योतिष्टोमे एव उत तत्प्रथमप्रयोगे वेति संशयः । तत्र 'न प्रथमयज्ञे प्रवृंज्यात्' इतीद वाक्यं ज्योतिष्टोमे प्रवर्ग्याख्यकर्मणः प्रकरणे श्रूयते । सोऽयं प्रतिषेधः ज्योतिष्टोमे एव । 'एष वाव प्रथमो यज्ञो यज्ञाना यज्ज्योतिष्टोम.' इत्यनेन वाक्येन ज्योतिष्टोमस्य प्रथममेव श्रुतत्वात् तत्रैव निषध इति पूर्वपक्ष ।

क्रतौ 'पुरस्तादुपसदा प्रवर्ग्य प्रवृणक्ति' इत्यनेन वाक्येन प्रवर्ग्य विधीयते । यथा च विधिनिषेधयोस्समबलत्वादनिर्णयः । इति चेन्न । निषेधवाक्यगतप्रथमशब्दो हि प्रथमप्रयोग इत्यर्थपरः । तथा च अग्निष्टोमसंस्थाकज्योतिष्टोमरूपप्रथमप्रयोगे अय निषेधः । तत्रापि 'कामं तु योऽनूचानः स्यात्, तस्य प्रवृञ्ज्यात्' इति वचनेन अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रयोगे एव अयं निषेध इति भाट्टमतेन पूर्वपक्षः ।

प्रभाकरमतम् .– 'एष वाव' इत्यादौ यज्ञशब्दस्य निषेधवाक्यगत-

यज्ञशब्देन सामानाधिकरण्यात् प्रथमयज्ञः ज्योतिष्टोम एव भवति । अतश्च सर्वस्मिन्नपि ज्योतिष्टोमे प्रवर्ग्यनिषेध इति पूर्वपक्षः । 'एतेन अनिष्ट्वा अथान्येन यजेत' इत्यनेन प्रथमयज्ञशब्दः प्रथमप्रयोगपरः । अतश्च ज्योतिष्टोमप्रथमप्रयोगे न प्रवर्ग्य इति प्रभाकरमतेन सिद्धान्तः ।

मतभेदः :- सर्वस्मिन्नपि ज्योतिष्टोमे प्रवर्ग्यनिषेध इति पूर्वपक्षः । तत्र वाक्येन ज्योतिष्टोमस्य प्रथमयज्ञावगमात् तत्रैव निषेध इति भाट्टमते । यज्ञशब्दसामानाधिकरण्यात् इति प्रभाकरमते पूर्वपक्षहेतुः । प्रथमयज्ञशब्देन प्रथमप्रयोगः गृह्यते । तत्रापि अनूचानव्यतिरिक्तकर्तृके ज्योतिष्टोमप्रथम-प्रयोगे एव प्रवर्ग्यनिषेध इति भाट्टमतम् । 'अथान्येन' इत्युक्तदिशा प्रथमप्रयोग एव गृह्यते । तथा च तत्रैव निषेध इति प्रभाकरमतम् ॥

—:o:—

## पौष्णपेषणस्य विकृतौ विनियोगाधिकरणम्

(३–३–१८)

पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ।३४।
इद सिद्धान्तपर सूत्रम् ।

उत्तराधिकरणे विशेष वक्तु अस्मिन्नधिकरणे सामान्यतयैवोच्यते । 'तस्मात्पूषाप्रपिष्टभागोऽदन्तको हि सः' इत्यनेन वाक्येन दर्शपूर्णमासयोः श्रूयमाणेन सन्तर्दनप्रतिपदादिवदेव दन्तरहितस्य पूष्णः प्रपिष्टभागत्वं विधीयते इति भाट्टमतम् ।

'पौष्णं पेषणं उत्तरविवक्षयेत्युक्तम्'[1] इति प्रभाकरमतम् ॥

---

1. बृहती P. 813

## पौष्णपेषणस्य चरावेव निवेशाधिकरणम्

(३-३-१९)

तत्सर्वार्थमविशेषात् ।३५। चरौ वाऽर्थोक्तं पुरोडाशेऽर्थ-विप्रतिषेधात्पशौ स्यात् ।३६। चरावपीति चेत् ।३७। न पक्तिनामत्वात् ।३८। इयन्ति सिद्धान्तपराणि सूत्राणि ।

पौष्णपेषणं कि चरौ पशौ पुरोडाशे विधीयते उत चरावेव इति संशयः । अत्रैव पेषणमिति विशेषादर्शनात् सर्वेषु पेषणमिति पूर्वपक्षः । पुरोडाशे पेषणस्य प्राप्तत्वादेव नात्र विधीयते । हृदयाद्याकारनाशाच्च न पशौ । तस्मात् चरावेवेति पारिशेष्यादवगम्यते इति भाट्टमतम् ।

**प्रभाकरमतम्** :– वाक्यसङ्कोचे हेत्वभावात् सर्वत्र पेषणमिति पूर्वपक्षः । पुरोडाशे पौष्णतया प्राप्तेरनुपयोगात्, कार्यत एव प्राप्तिरिष्यते । पशौ च आकृतिनाशान्न तत्र पेषणं विधीयते । अतश्च चरावेव पेषणं विधीयते इति प्रभाकरमतम् ।

**मतभेदः** :– चरौ पशौ पुरोडाशे च पेषणमिति पूर्वपक्षः । पारि-शेष्याच्चरावेव पेषणमिति सिद्धान्तश्च समान एव ॥

—·o:—

## पौष्णपेषणस्य एकदेवत्ये निवेशाधिकरणम्

(३–३–२०)

एकस्मिन्नकसंयोगात् ।३९। धर्मविप्रतिषेधाच्च ।४०। अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् ।४१। लिङ्गदर्शनाच्च ।४२। वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषण भवति ।४३। एकस्मिन्वार्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ।४४। हेतुमात्रमदन्तत्वम् ।४५। वचनं परम् ।४६। इमानि सर्वाणि सिद्धान्तपराणि सूत्राणि ।

पौष्णपेषणस्य द्विदेवत्ये निवेश. उत एकदेवत्ये वा इति सशयः । तत्र 'सौमापौष्ण चरु निर्वपति, एन्द्रापौष्णं चरूम्' इत्यत्र राजसूयान्तर्गत–वाक्ययोः पिष्टभाजः पूष्णः सत्त्वात् द्विदेवताके चरावपि पेषणं विधीयते इति पूर्वपक्षः । यागमन्तरेण केवलदेवतायाः फलजनकत्वसामर्थ्याभावात् पेषणस्य देवता प्रयोजिका न भवतीति तत्र पेषणं प्रयोक्तु न प्रभवति । अतः पौष्णस्य यागस्य पेषणस्य प्रयोजकत्वे द्विदेवताके पेषण गन्तु नार्हति । 'प्रपिष्टभागः' इत्यत्र भागशब्दस्य अन्यथानुपपत्त्या यागपरत्वं गम्यते । सति च देवतात्वे द्रव्यदेवतयोर्लाभाद्यागः सिध्यति । तथा च पौष्णपेषणस्य एकदेवत्ये एव निवेश इति भाट्टमतेन सिद्धान्तः ।

प्रभाकरमतम् :– केवलपौष्णदेवत्ये पेषण विधीयते उत अन्यसहितेऽपीति सशयः । तत्र द्विदेवताकेऽपि पेषणं भवत्येव । अन्यथा पूष्णः प्रपिष्टभागो न स्यात् । तस्मात् द्विदेवताकेऽपि पूषणमिति पूर्वपक्षः । कार्यप्रयुक्ताः धर्माः कार्ये असम्भवन्तः लक्षणया तत्सम्बद्धे यागे व्यवकल्पन्ते ।

तेन च पूषदेवत्ययागे एव पेषणविधि । तथा च न द्विदेवताके पेषणं विधीयते इति प्रभाकरमतेन सिद्धान्त ।

**मतभेद** :– पूषदेवतायास्सत्त्वात् द्विदेवताकेऽपि पेषणमिति भाट्टमते पूर्वपक्षः। पूष्ण. प्रपिष्टभागाय द्विदेवत्यकेऽपि पेषणमिति प्रभाकरमते पूर्वपक्षः । भागशब्दस्य अन्यथानुपपत्त्या यागपरत्वाङ्गीकारात् एकदेवताके एव पेषणमिति भाट्टमतम् । धर्माणां लक्षणया यागसम्बन्धावसायात् एकदेवताके एव पेषणविधिरिति प्राभाकरमतम् ॥

इति

तृतीयाध्यायस्य तृतीय पादः समाप्तः

—

## तृतीयाध्यायस्य तृतीयपादाधिकरणेषु प्रतिपादितविषयाः

१. उच्चैस्त्वादिः वेदधर्म एवेति प्रथमाधिकरणे प्रतिपादितम् ।
२. वामदेव्यादिसाम्नां विनियोगनिबन्धन एव स्वर इति द्वितीयाधिकरणे प्रतिपादितम् ।
३. यत्र अङ्गबाहुल्य तत्रैव विधिरिति तृतीयाधिकरणे प्रतिपादितम् ।
४. प्रकरणस्य प्रामाण्यं चतुर्थाधिकरणे प्रतिपादितम् ।
५. क्रमस्य प्रामाण्यं पञ्चमाधिकरणे प्रतिपादितम् ।
६. समाख्यायाः प्रामाण्यं षष्ठाधिकरणे प्रतिपादितम् ।
७. लिङ्गाद्यपेक्षया श्रुतेः प्राबल्यं सप्तमाधिकरणे प्रतिपादितम् ।
८ वाक्याद्यपेक्षया लिङ्गस्य प्राबल्यं अष्टमाधिकरणे प्रतिपादितम् ।
९. प्रकरणाद्यपेक्षया वाक्यस्य प्राबल्यं नवमाधिकरणे प्रतिपादितम् ।

१०. क्रमाद्यपेक्षया प्रकरणस्य प्राबल्यं दशमाधिकरणे प्रतिपादितम् ।

११. समाख्यापेक्षया क्रमस्य प्राबल्यं एकादशाधिकरणे प्रतिपादितम् ।

१२. पूर्वपूर्वप्रमाणापेक्षया उत्तरोत्तरस्य दौर्बल्यम् इत्येवं पूर्वाधिकरणेषु प्रतिपादितविषयाः अप्राप्तबाधविपयकाः इति द्वादशाधिकरणे प्रतिपादितम् ।

१३. द्वादशोपसत्ताया अहीनाङ्गत्वमिति त्रयोदशाधिकरणे प्रतिपादितम् ।

१४. कुलायादौ प्रतिपदोत्कर्ष एवेति चतुर्दशाधिकरणे निरूपितम् ।

१५. प्रकरणादुत्कर्षे प्रमाणाभावात् जाघन्याः नोत्कर्ष इति पञ्चदशाधिकरणे प्रतिपादितम्।

१६. प्रकरणात् सन्तर्दनस्य विकृतौ उत्कर्ष इति षोडशाधिकरणे प्रतिपादितम् ।

१७. अनूचानव्यतिरिक्तकर्तृकज्योतिष्टोमप्रथमप्रयोगे एव प्रवर्ग्यनिषेध इति सप्तदशाधिकरणे प्रतिपादितम् ।

१८. पौष्णपेषणस्य विकृतौ विनियोग इति अष्टादशाधिकरणे प्रतिपादितम् ।

१९. पौष्णपेषणस्य चरावेव निवेश इति एकोनविंशाधिकरणे प्रतिपापितम् ।

२०. पौष्णपेषणस्य एकदेवत्ये एव निवेश इति विंशतितमाधिकरणे निरूपितम् ।

इति

तृतीयाध्यायस्य तृतीयः पादः समाप्तः

— —

## —: सङ्केतनामसूची :—

1. J· N· V. – जैमिनीय न्यायमालाविस्तरः ।
2. S D. – शास्त्रदीपिका ।
3. स. वा. शा. – सतन्त्रवार्तिकशाबरमाष्योपेतम् ।
4. मी द. – मीमासादर्शनम् ।
5. प. स्मृ. व्या. – पराशरस्मृतिव्याख्या ।
6. मी.श्लो.वा. – मीमासाश्लोकवार्तिकम् ।

—:o:—

# उपयुक्तग्रन्थसूची

१. जैमिनीयन्यायमालाविस्तरः ।–माधवः, संशोधकः शिवदत्तशर्मा, आनन्दाश्रममुद्रणालयः । १९१६.

२. शास्त्रदीपिका ।–पार्थसारथिमिश्र , सम्पादकः – धर्मदत्तसूरिः, आनन्दाश्रममुद्रणालयः । १९१५.

३. बृहती–प्रभाकरमिश्रः, सम्पादक :– एस्. सुब्रह्मण्यशास्त्री, मद्रास् विश्वविद्यालयः, १९६४. १, २, ३, ४ भागाः ।

४. मीमासादर्शनम्–जैमिनिः, बैद्यनाथप्रणीतप्रभाभिधाव्याख्यासहिततर्क-पादान्तः, सम्पादक - सुब्रह्मण्यशास्त्री, आनन्दाश्रममुद्रणालयः, १९५३

५. मीमांसादर्शनम्–जैमिनिः (सतन्त्रवार्तिकशाबरभाष्योपेतः, १-२-१ तः २-१-१७) सशोधकः– गणेशशास्त्री जोषी, आनन्दाश्रम–मुद्रणालयः, १९८१.

६. मीमासादर्शनम्–जैमिनिः (सतन्त्रवार्तिकशाबरभाष्योपेतः, २-२-१ तः, ३-५-२०) सशोधकः- सुब्बाशास्त्री, आनन्दाश्रममुद्रणालयः, १९३०

७. पराशरस्मृतिव्याख्या-माधव :– वाविल्लमुद्रणालयः, १८८३.

८. शङ्करदिग्विजयः– माधवः - डिण्डिमाख्यटीकया समेतः, आनन्दाश्रम-मुद्रणालयः, १९३२.

९. श्लोकवार्तिकम्–(मीमांसाश्लोकवार्तिकम्)
कुमारिलभट्टः । सशोधकः–रामशास्त्री,
चौखम्भामुद्रणालय , वारणासी, १८९८.

—:o:—